कोटीरकोटिस्थमहार्घकोटिमणिप्रभाजालवृतं गुहं त्वाम् ।
अनन्यचेताः प्रणवाब्जहंसं वेदाहमेतं पुरुषं महान्तम् ।। ६

स नोऽवतु स्वालिकपङ्क्तिजीवग्रहं गृहीतायत चन्द्रखण्डः ।
गुहादसीयन्तमिदं स्वरूपं परात्परं यन्महतो महान्तम् ।। ७

स्वर्गापगामध्यगपुण्डरीक दलप्रभाजैत्रविलोचनस्य ।
अक्ष्णां सहस्रेण विलोक्यमानं न सन्दृशे तिष्ठति रूपमस्य ।। ८

हेमद्विषत्कुण्डलमण्डलाढ्यगण्डस्थलीमण्डिततुण्डशोभः ।
ब्रह्म त्वमेवेति गुहो मुनीन्द्रैः हृदा मनीषा मनसाऽभिक्लृप्तः ।। ९

सुपक्वबिम्बाधरकान्तिरक्तसन्ध्यामृगाङ्कायितदन्तपङ्क्तिः ।
गुहस्य नः पातु विलोलदृष्टिः येनावृतं खं च दिवं महीं च ।। १०

करीन्द्रशुण्डायितदोःप्रकाण्ड द्विषट्ककेयूरविराजमानम् ।
गुहं मृडानीभवमप्रमेयं न चक्षुषा पश्यति कश्चनैनम् ।। ११

स्वकीयदोर्दण्डगृहीतचण्डकोदण्ड निर्मुक्त पृषत्कषण्डैः ।
त्रिविष्टपान्धङ्करणैरशून्यान् यः सप्त लोकानकृणोद्दिशश्च ।। १२

सौवर्णहारादिविभूषणोज्ज्वलन्-
मणिप्रभालीढ विशालवक्षाः ।
स्कन्दः स मां पातु जिताब्जयोनिः
अजायमानो बहुधा विजायते ।। १३

देवस्स वैहारिकवेषधारी लीलाकृताशेषजगद्विमर्दः ।
शिखिध्वजः पातु भयङ्करेभ्यो यः सप्त सिन्धूनदधात्पृथिव्याम् ।।

षडाननो द्वादशबाहुदण्डः श्रुत्यन्तगामी द्विषडीक्षणाढ्यः ।
भीताय मह्यं गिरिजातनूजो हिरण्यवर्णस्त्वभयं कृणोतु ।। १५

यो दानवानीकभयङ्कराटवी समूलकोत्पाटनचण्डवातः ।
षाण्मातुरः संहृत सर्वशत्रुः अथैकराजो ह्यभवज्जनानाम् ।। १६

अतीव बालः प्रवयाः कुमारो वर्णी युवा षण्मुख एकवक्त्रः ।
इत्थं महस्तद्बहुधाऽऽविरासीद्यदेकमव्यक्तमनन्तरूपम् ।। १७

यदीयमायावरणाख्यशक्ति तिरोहितान्तःकरणा हि मूढाः ।
न जानते त्वां गुह तं प्रपद्ये परेण नाकं निहितं गुहायाम् ।। १८

गुरूपदेशाधिगतेन योगमार्गेण संप्राप्य च योगिनस्त्वाम् ।
गुहं परं ब्रह्म हृदम्बुजस्थं विभ्राजदेतद्यतयो विशन्ति ।। १९

यो देवसेनापतिरादराद्धै ब्रह्मादिभिर्देवगणैरभिष्टुतः ।
तं देवसेनान्यमहं प्रपद्ये विश्वं पुराणं तमसः परस्तात् ।। २०

हृदम्बुजान्तर्दहराग्रवर्ति कुशानुमध्यस्थपरात्मरूपात् ।
गुहात्सुसूक्ष्मान्मुनयः प्रतीयुरतः परं नान्यदणीयसं हि ।। २१

तपःप्रसन्नेशबहुप्रदत्तवरप्रमत्तासुरभीतिभाजाम् ।
सुपर्वणां स्कन्द भवान् शरण्यः इन्द्रस्य विष्णोर्वरुणस्य राज्ञः ।। २२

स एव देवो गिरिजाकुमारो राजा स मित्रं स हि नो वरेण्यः ।
भ्राता स बन्धुः स गुरुः स्वसा च स एव पुत्रः स पिता च माता ।। २३

स्वराज्यदात्रे स्वसुतां वितीर्य तां देवसेनां सुकुमारगात्राम् ।
आराधयत्यन्वहमांबिकेयं इन्द्रो हविष्मान्सगणो मरुद्भिः ।। २४

देवेन येनालघुविक्रमेण हतेषु सर्वेष्वपि दानवेषु ।
पुरेव देवाः स्वपदेऽधिचक्रुः इन्द्रश्च सम्राड् वरुणश्च राजा ।। २५

षाण्मातुरोऽसौ जगतां शरण्यस्तेजोऽन्नमापः पवनश्च भूत्वा ।
भूसंरक्षणायैव जगत्सु देवो विवेश भूतानि चराचराणि ।। २६

करौ ! युवामञ्जलिमेव नित्यं उमाङ्गजाताय विधत्तमस्मै ।
एष प्रसन्नः सुकुमारमूर्तिरस्मासु देवो द्रविणं दधातु ।। २७

निधिः कलानामुदधिर्दयानां पतिर्जनानां सरणिर्मुनीनाम् ।
कदा प्रसीदेन्मयि पार्वतेयः पिता विराजामृषभो रयीणाम् ।। २८

सौन्दर्यवल्लीतनुसौकुमार्य सरोजपुष्पन्धयमानसो यः ।
चचार कान्तारपथेषु देवः स नो ददातु द्रविणं सुवीर्यम् ।। २९

इतोऽपि सौन्दर्यवदस्तु देहमितीव हुत्वा शिवफालनेत्रे ।
जातस्ततः किं स कुमार एव कामस्तदग्रे समवर्तताधि ।। ३०

मुमुक्षुलोकाः शृणुत प्रियं वो भजध्वमेनं गिरिजाकुमारम् ।
अस्यैव देवस्य परात्मतेति हृदि प्रतीक्ष्या कवयो मनीषा ।। ३१

धेनुर्बह्वीः कामदोग्ध्रीः सुवत्साः
कुण्डोध्नीर्गा देहि नस्त्वं सहस्रम् ।
भक्तार्तिघ्नं देवदेवं षडास्यं
विद्माहि त्वा गोपतिं शूरगोनाम् ।। ३२

वन्दामहे बर्हिणवाहनस्थितं वनीपकाशेषमनीषितप्रदम् ।
तोष्टूयमानं बहुधा पदे पदे सङ्क्रन्दनेनानिमिषेण जिष्णुना ।। ३३

दिग्भ्यो दशभ्यः परितः पुनः पुनः
परश्शतायातसिषेविषावताम् ।
अनुग्रहायैव षडाननो ह्यसौ
प्रत्यङ्मुखस्तिष्ठति विश्वतोमुखः ।। ३४

कूर्मः फणीन्द्रश्च तथा फणाभृतो
दिग्दन्तिनश्चैव कुलाचला अपि ।
भूत्वाऽम्बिकेयः प्रथितः प्रतापवान्
ब्रह्माध्यतिष्ठत् भुवनानि धारयन् ।। ३५

यो वै स्कन्दः पृष्टः शम्भोः सत्यं ज्ञानं ब्रह्माद्वैतम्।
ओङ्कारार्थं प्राह स्मेत्थं सुब्रह्मण्यों सुब्रह्मण्योम्॥ ३६

यो जाह्नवीशरारण्यह्रदाम्भोजे बभौ पुरा।
तस्मै नमः षण्मुखाय महासेनाय धीमहि॥ ३७

यद्दक्षिणकराम्भोजमिष्टदं स्वानुजीविनाम्।
तेभ्य इन्द्रादिसेनानां सेनानिभ्यश्च वो नमः॥ ३८

देवतानामृषीणां च भक्तानामपि योगिनाम्।
भूतानामपि वीराणां पतीनां पतये नमः॥ ३९

नमस्तेऽस्तु महेशान भीतेभ्यः शूरपघ्नतः।
सुनासीरमुखेभ्यस्त्वं स्वस्तिदा अभयङ्करः॥ ४०

कटाक्षवीक्षणापास्त निखिलव्याधिबन्धन।
देवसेनापते स्वामिन् अभि त्वा शूर नूनुमः॥ ४१

अन्तश्चरसि भूतेषु त्वमेकः सूक्ष्मरूपतः।
त्वमेव निगमान्तेषु परमात्मा व्यवस्थितः॥ ४२

मही द्यौरन्तरिक्षं च वायुरापोऽनलोऽम्बरम्।
सुब्रह्मण्य जगन्नाथ त्वयि सर्वं प्रतिष्ठितम्॥ ४३

शैशवे त्वं महासेन बन्दीकृत्य प्रजापतिम्।
अस्राक्षीस्तान्यथापूर्वं मनुष्याः पशवश्च ये॥ ४४

वेदान्तकन्दरीवर्ति गुहाशयषडानने।
त्रिलोकीयं त्वयि विभो नावीवान्तः समाहिता॥ ४५

कला मुहूर्ताः काष्ठाश्च मासा वर्षा युगानि च।
त्वयि वल्लीश निहिता निमेषास्त्रुटिभिः सह॥ ४६

रोगकान्तारदावाग्ने मृत्युकक्षहुताशन ।
शूरघ्न त्वत्प्रतापेन रेजते रोदसी उभे ।। ४७

परं ब्रह्म विचिन्वन्तो हृदयाम्भोजमध्यगम् ।
योगिनो नारदाद्यास्त्वां सदा पश्यन्ति सूरयः ।। ४८

हतशूरमुखाशेषदैतेयं त्वां गुहास्तुवन् ।
अग्नाविष्णू चेन्द्रवायू सोमो धाता बृहस्पतिः ।। ४९

वाचालयस्यवाचं त्वं सचक्षुः कुरुषेऽदृशाम् ।
आश्रितेभ्यो जगन्नाथ शिवो नः सुमना भव ।। ५०

स एव जगतः कर्ता भर्ता हर्ता जगद्गुरुः ।
कुमारः सच्चिदानन्दः सोऽक्षरः परमः स्वराट् ।। ५१

असुरान् शूरपद्मादीन् हत्वा शरवणोद्भवः ।
देवान् स्वस्वपदे कृत्वा सम्राडेको विराजसि ।। ५२

तव दृष्ट्वा विश्वरूपं सहर्षभयवेपथु ।
त्वामस्तुवन्नादितेयाः बृहस्पतिपुरोहिताः ।। ५३

किन्नरा गरुडा नागा यक्षाः साध्या मरुद्गणाः ।
ऐन्द्रीशं त्वामहरहः विश्वे देवा उपासते ।। ५४

विश्वासान्मानुषीणां च प्रजानां पशुपक्षिणाम् ।
चराचराणां जगतां ध्रुवो राजा विशामयम् ।। ५५

अम्भोजसंवर्तिकासु राजहंसा इव प्रभो ।
मदीयहृदयाम्भोजे ध्रुवस्तिष्ठाविचाचलिः ।। ५६

लीलामात्रकृताशेषभुवनाद् गिरिजासुतात् ।
अथर्व चाथ ऋक्साम यजुस्तस्मादजायत ।। ५७

तिले तैलमिव प्रोतं दध्न्याज्यमिव षण्मुखे ।
मणौ सूत्रमिव स्यूतं ब्रह्म विश्वमिदं जगत् ।। ५८

यस्तप्तादीनृषीन् शापादुद्दधार हरात्मजः ।
मातुः स्तनसुधापूरे पुत्रः प्रमुदितो धयन् ।। ५९

इज्यया पूजया स्तुत्या भक्त्या च परिचर्यया ।
ध्यानेन तपसा च त्वां देवं मनसि ईडते ।। ६०

श्रुतिस्मृत्यागमाद्युक्तकर्मणां फलदायिने ।
स्कन्दाय तुभ्यं मखिभिः श्रद्धया हूयते हविः ।। ६१

मूर्धा द्यौरम्बरं नाभिरूरू भूरतलं पदे ।
षण्मुखस्येत्येवमाहुः अन्तर्विश्वमिदं जगत् ।। ६२

भक्तसन्तापशमन प्रावृषेण्यघनाघनात् ।
स्कन्दादन्यं मनो मागाः स दृष्टो मृडयाति नः ।। ६३

जिह्वे त्वमुच्चैर्निस्तन्द्रा रात्रिन्दिवमभिष्टुहि ।
देवसेनं महासेनं अदुग्धा इव धेनवः ।। ६४

अकलङ्कशरच्चन्द्रविलसत्त्वन्मुखस्रुताः ।
मन्दस्मितसुधाधारास्ता मे कृण्वन्तु भेषजम् ।। ६५

देवानीजिमहे पूर्वं तपश्चकृमहे पुरा ।
यद्गुहो देवतास्माकं कविर्गृहपतिर्युवा ।। ६६

मदीयहृदयाम्भोजनिर्यूहमणिमञ्चके ।
षडानन त्वत्पादः स्यादियान् प्रादेशसंमितः ।। ६७

चिरन्तनवचःस्तुत्यः प्रणवाम्बुजषट्पदः ।
करोतु देवसेनेशः शिवा नः प्रदिशो दिशः ।। ६८

दैतेयवधसन्नद्धो भवान् पवनसारथिः ।
द्विलक्षमर्वतो हैमे रथे युक्त्वाऽधितिष्ठति ।। ६९

गगनोच्छ्रित कोदण्डकिरीटं शूरमाहवे ।
बिभेदिथ त्वं नाराचैः सहस्रेण शतेन च ।। ७०

ऐशाल्ललाटनयनात् जातं वह्निर्यथाऽरणेः ।
मुमुक्षवो गुहं ब्रह्म विचिन्वन्तु मनीषया ।। ७१

हिरण्यज्योतिषं स्कन्दं याचध्वं भो वनीपकाः ।
एषोऽर्थिनः पूरयति प्रजया च धनेन च ।। ७२

सन्निधास्यति किं स्वामी भवानम्बुरुहेक्षणः ।
तावकं मञ्जुलं रूपं स्मर्यते च न दृश्यते ।। ७३

यतस्त्वं जगतामेषां आशिषे शिखिवाहन ।
ततो देहि बहून्व्रीहीन् अकृष्टा ये च कृष्टजाः ।। ७४

धनधान्यगृहान् पुत्रान् देहि देव दयानिधे ।
त्वमाश्रितेष्टद इति कर्णाभ्यां भूरि विश्रुतम् ।। ७५

भक्तेभ्यो मुचुकुन्दाख्यप्रमुखेभ्यो यथा गुह ।
प्रादास्तथा देहि मह्यमच्युतां बहुलां श्रियम् ।। ७६

भक्तान् तत्पुत्रसुहृदः तन्मातृपितृसोदरान् ।
पाहि स्कन्द पुनश्चास्य द्विपदो ये चतुष्पदः ।। ७७

चोरव्याघ्र पिशाचाखु सर्पकीटादिबाधकात् ।
भक्तान्निशासु संरक्षन् त्रिषु लोकेषु जागृहि ।। ७८

दानवेष्वपि दैत्येषु राक्षसेष्वप्यरातिषु ।
पिशाचेष्वपि गाङ्गेय विक्रमस्व महानसि ।। ७९

आधिभिर्व्याधिभिश्चैव पीडितानामहर्निशम् ।
दूतानां वपुषि स्वामिन् आसुवोर्जमिषं च नः ॥ ८०

अतितीव्रेण तपसा तप्यमाना अहर्निशम् ।
उपासत त्वां तप्ताद्याः अथ हैनं पुरर्षयः ॥ ८१

ध्यानावाहनपूजेज्यापरिचर्यास्तुतिष्वहम् ।
अज्ञो मे सफलां पूजां कृणुहि ब्रह्मणस्पते ॥ ८२

असुरान् राक्षसान् क्रूरान् देवयज्ञविधातकान् ।
जहि देवेश यस्मात्त्वं रक्षोहामीवचातनः ॥ ८३

दुर्वृत्तेभ्यो धनं धत्से नीचेभ्योऽपि धनं बहु ।
न ददासि कुतो मह्यं एतत्पृच्छामि संप्रति ॥ ८४

मुखैरेतान्महारौद्रान् दूरीकुरु जगत्पते ।
मम स्वमभिकांक्षन्ते ये स्तेना ये च तस्कराः ॥ ८५

गुह त्वत्पादभक्तानां गेहे जाग्रत्वहर्दिवम् ।
वीरबाहुमुखा वीर ते नित्यानुचरास्तव ॥ ८६

त्रिषड्विलोचनेष्वेकदृक्कटाक्षेण लक्षयन् ।
आढ्यं करोतु मां स्कन्दः पर्जन्यो वृष्टिमानिव ॥ ८७

भयानकासुरानीककान्दिशीकाः पुरा खलु ।
गुह त्वां शरणं प्रापुः इन्द्रेण सह देवताः ॥ ८८

त्वामेव कीर्तयन्देव ध्यायन् शृण्वन् प्रपूजयन् ।
गुह त्वत्पादभक्तोऽहं जीवानि शरदः शतम् ॥ ८९

कृपादुग्धाब्धिकल्लोलायमानापाङ्गवीक्षण ।
देहि मे गुह बह्वायुर्दीर्घायुस्त्वमिहेशिषे ॥ ९०

पुरारातीक्षणपयःपारावारसुधाकर।
षड्वक्त्र धेहि कृपया मयि मेधां मयि प्रजाम्।। ९१

भक्तचातकबृन्देष्टवर्षिधाराधर प्रभो।
अस्मान् सञ्जीवय स्वामिन् अस्मिन् लोके शतं समाः ।। ९२

भीता वयं महासेन पथि दुर्गे वने यतः।
चोरव्याघ्रपिशाचेभ्यः ततो नो अभयं कृधि।। ९२

व्याधयः शूलकुष्ठार्शःप्रमेहाद्या यतः सदा।
पीडयन्ति पिशाचाद्याः ततो नो धेहि भेषजम्।। ९४

त्वदीयपादकमलध्यानवर्मित विग्रहान्।
कुहका मोहकाः क्षुद्राः माऽस्मान्प्रापन्नरातयः ।। ९५

धनधान्यपशुक्षेत्रबलेष्वस्मदपेक्षया।
देवसेनापतेऽस्माकं अधरे सन्तु शत्रवः ।। ९६

अरातिकुलनिर्मूलनालङ्कर्मीणविक्रम।
अकारणेन बहुधा यो नो द्वेष्टि स रिष्यतु।। ९७

मन्त्रैर्यन्त्रैस्तथा तन्त्रैः औषधैरायुधैरपि।
जिघांसति च योऽस्मान् स द्विषन्मे बहु शोचतु।। ९८

आखण्डलारीनसुरान् त्वं तु स्पर्धावतो यथा।
जहि गाङ्गेय तौ मर्त्यौ यं चाहं द्वेष्टि यश्च माम्।। ९९

त्वन्नामकीर्तनपरक्षेमङ्कर कराम्बुज।
तमिमं संहर स्वामिन् यश्च नो द्वेषते जनः ।। १००

दूरेऽन्तिके वा यः शत्रुः अस्माननपराधिनः।
शपत्येनं जहि स्कन्द यश्च नः शपतः शपात्।। १०१

चक्षुषा मनसा वाचा मन्त्रेण हवनेन च ।
तत्कृत्यां नाशय स्वामिन् भ्रातृव्यस्याभिदासतः ।। १०२

मच्छिद्रान्वेषिणः शत्रोः धनमायुः प्रजाः पशून् ।
सर्वान्नाशय शूरघ्न मा तस्योच्छेषि किञ्चन ।। १०३

अविद्वांसश्च विद्वांसः स्वप्ने जाग्रति वा गुह ।
तेभ्यो मोचय मां यद्यदेनांसि चकृमा वयम् ।। १०४

वयमूचिम यद्देव जिह्वया देवहेलनम् ।
एनसो मोचयाग्नेय त्वं हि वेत्थ यथातथम् ।। १०५

वित्तार्थं वा तथाऽन्यार्थं विप्रार्थं गोऽर्थमेव वा ।
पुनीह्यस्मांस्ततः स्कन्द यत्किञ्चानृतमूदिम ।। १०६

तमागसं क्षमस्व त्वं स्वकीयाभीष्टलिप्सया ।
संप्रार्थ्य तुभ्यं वाऽन्यस्मै यद्वाचाऽनृतमूदिम ।। १०७

सौन्दर्यवल्ल्या सहितं अम्बया देवसेनया ।
महासेनं भजे देवं सत्येन तपसा सह ।। १०८

यो वै पठेद्गुहस्यैनं वेदान्तस्तवमादरात् ।
स्कान्दाः कटाक्षास्तस्योच्चैरायुः कीर्तिं प्रजां ददुः ।। १०९

स्कन्दस्यैनं वेदपादस्तवं यो
भक्त्या नित्यं श्रावयेद्वा पठेद्वा ।
भूयासुस्ते तस्य मर्त्यस्य शीघ्रं
ये ये कामा दुर्लभा मर्त्यलोके ।। ११०

(स्कान्दपुराणतः)

* * *

॥ श्रीः ॥

# स्कन्दलहरी

श्रियै भूयाः श्रीमच्छरवणभव त्वं शिवसुतः
प्रियप्राप्त्यै भूयाः प्रतनगजवक्त्रस्य सहज ।
त्वयि प्रेमोद्रेकात्प्रकटवचसा स्तोतुमनसा
मयाऽऽरब्धं स्तोतुं तदिदमनुमन्यस्व भगवन् ॥ १

निराबाधं राजच्छरदुदितराकाहिमकर-
प्ररूढ ज्योत्स्नाभास्मितवदनषट्कस्त्रिणयनः ।
पुरः प्रादुर्भूय स्फुरतु करुणापूर्णहृदयः
करोतु स्वास्थ्यं वै कमलदलबिन्दूपमहृदि ॥ २

न लोकेऽन्यं देवं नतजनकृतप्रत्ययविधिं[1]
विलोके भीतानां निखिलभयभीतैकशरणम्[2] ।
कलौ कालेऽप्यन्तर्हरसि तिमिरं भास्कर इव
प्रलुब्धानां भोगेष्वपि निखिल भोगान्वितरसि ॥ ३

शिव स्वामिन् देव श्रितकलुषनिःशेषण गुरो[3]
भवध्वान्तध्वंसे मिहिरशतकोटिप्रतिभट ।
शिवप्राप्त्यै सम्यक्फलित सदुपायप्रकटन
ध्रुवं त्वत्कारुण्ये कलिरपि कृती भूपविभवः ॥ ४

अशक्तानां कर्मस्वपि निखिलनिःश्रेयसकृतौ
पशुत्वग्रस्तानां पतिरसि विपाशत्वकलने ।
प्रशस्तानां भूम्नां निधिरसि निरोद्धा निजशुचां
अशक्तानां कर्ता जगति धृतशक्तिः किल भ[4]वान् ॥ ५

1. नतजनपरित्राण निपुणं, 2. विध्वंसनचणम्, 3. विभो,

4. जगत्कर्ता भर्ता भवसि विनिहर्ताऽन्तसमये

रुषार्तानां हर्ता विषयिविषयाणां घटयिता
तृषार्तानां काले परममृतवर्षी घन इव।
मृषाज्ञानार्तानां निखिलविचिकित्सापरिहरो
विषग्रस्तानां त्वं सकलभयहर्ता विलससि ॥ ६

रसाधिक्यं भक्तैरधिकमधिकं वर्षय विभो
प्रसीद त्वं भूयः प्रकटय चिदानन्दलहरीम्।
असारे संसारे सदसति न लिप्तं मम मनः[1]
कुसीदं भूयान्मे कुशलवति निःश्रेयसपथे ॥ ७

महामोहारण्ये विचरति मनस्तन्नियमयन्
अहन्तां निश्शेषीकुरु करुणया त्वं स्नपय माम्।
महीयो माहात्म्यं तव मननमार्गे स्फुरतु मे
महस्स्तोमाकारे त्वयि मतिजुषि स्यात्क नु तमः ॥ ८

वलक्षाभं स्निग्धं वदनकमलेभ्यः प्रसृमरं
मिलत्कारुण्यार्द्रं मृदितभुवनार्तिं स्मितपदम्।
पुलिन्दापत्यस्य प्रकटपुलकोद्रेकजनकं
दलद्दैन्यं खेदं हरतु सततं नः सुरगुरो[2] ॥ ९

अतीतो ब्रह्मादीन् कृतिमुखकृतः कारणपतीन्
क्षितिस्तोयं वह्निर्मरुदसि वियत्तत्वमखिलम्।
पतिः कृत्यानां त्वं परिणतचिदात्मेक्षणवतां
धृतिस्त्वं ध्यातः सन् दिशसि निजसायुज्यपदवीम् ॥ १०

त्वदात्मा त्वच्चित्तस्त्वदनुभवबुद्धिस्मृतिपथः
त्वया व्याप्तं[3] सर्वं जगदिदमशेषं स्थिरचरम्।
सदा योगी साक्षाद्व्रजति तव सारूप्यममलं
त्वदायत्तानां किं न हि सुलभमष्टौ च विभवाः[4] ॥ ११

1. न सङ्गो भवतु मे, 2. शरजने, 3. त्वदालोकः, 4. भवति दुरवापं त्रिजगति

कति ब्रह्माणो वा कति कमलनेत्राः कति हराः
कति ब्रह्माण्डानां कति च शतकोटिष्वधिकृताः ।
कृताज्ञाः सन्तस्ते विविधकृतिरक्षाभृतिकराः
अतः सर्वैश्वर्यं तव यदपरिच्छेद्यविभवम् ।। १२

नमस्ते स्कन्दाय त्रिदशपरिपालाय महते
नमः क्रौञ्चाभिख्यासुरदलनदक्षाय भवते ।
नमः शूरक्रू[1]रत्रिदशरिपुदण्डाध्वरकृते
नमो भूयो भूयो नतिकृदवने जागरवते ।। १३

शिवस्त्वं शक्तिस्त्वं तदुभयतमैक्यं पृथगसि[2]
स्तवे ध्याने पूजाजप नियममुख्येष्वभिरताः ।
भुवि स्थित्वा भोगान् सुचिरमुपभुज्य प्रमुदिताः
भवन्ति स्थाने तत्[3] तदनु पुनरावृत्तिविमुखाः ।। १४

गुरोर्विद्यां लब्ध्वा सकलभयहन्त्रीं जपपराः
पुरश्चर्यामुख्यक्रमविधिजुषो ध्याननिपुणाः ।
व्रतस्थैः कामौघैरभिलषितवाञ्छां प्रियभुजः
चिरं जीवन्मुक्ता जगति विजयन्ते सुकृतिनः ।। १५

शरज्ज्योत्स्नाशुभ्रं स्फटिकनिकुरुंबाभरुचिरं[4]
स्फुरन्मुक्ताहारं धवलवसनं भावयति यः ।
प्ररोहत्कारुण्यामृत बहुलधाराभिरभितः
चिरं सिक्तात्मा वै स भवति च विच्छिन्ननिगडः ।। १६

वृथा कर्तुं दुष्टान् विविधविषवेगान् शमयितुं
सुधारोचिष्कोटि प्रतिभटरुचिं भावयति यः ।

1. प्रष्ठ, 2. प्रथयसि तदैक्यं गुह विभो 3. त्वत्स्थाने, 4. तिविमलं

अधः कर्तुं साक्षाद्भवति[1] विनतासूनुमचिरात्
विधत्ते सर्पाणां विविधविषदर्पापहरणम् ।। १७

प्रवालाभापूरे प्रसरति महस्ते जगदिदं
दिवं भूमिं काष्ठाः सकलमपि सञ्चिन्तयति यः ।
द्रवीकुर्याच्चेतस्त्रिदशनिवहानामपि सुखाद्
भुवि स्त्रीणां पुंसां वशयति तिरश्चामपि मनः ।। १८

नवांभोदश्यामं मरकतमणिप्रख्यमथ वा
भवन्तं ध्यायेद्यो भवति निपुणो मोहनविधौ ।
दिविष्ठानां भूमावपि विविधदेशेषु वसतां
नृणां देवानां वा वियति चरतां पत्रिफणिनाम्[2] ।।१९

कुमार श्रीमंस्त्वां कनकसदृशाभं स्मरति यः
समारब्धस्तम्भे सकलजगतां वा प्रभवति ।
समस्तद्युःस्थानां प्रबलपृतनानां सवयसां
प्रमत्तव्याघ्राणां किटिहयगजानां च सपदि ।। २०

धटात्कारैः[3] साकं सहकृतमहाधूमपटल-
स्फुटाकारं साक्षात्स्मरति यदि मन्त्री सकृदपि ।
हठादुच्चाटाय प्रभवति मृगाणां स पततां
पटुर्विद्वेषे स्याद् विधिरचित पाशं विघटयन् ।। २१

स्मरन्घोराकारं तिमिरनिकुरुम्बस्य सदृशं
जपन्मन्त्रान् मर्त्यः सकलरिपुदर्पक्षपयिता ।
स रुद्रेणौपम्यं भजति परमात्मन् गुह विभो
वरिष्ठः साधूनामपि च नितरां त्वद्भजनवान् ।। २२

1. शक्तो भवति, 2. ध्रुवं पक्षीणां वा भुजगवनितानां सपदि सः

3. छटात्कारैः

महाभूतव्याप्तं कलयति च यो ध्याननिपुणः
स भूतैः सन्त्यक्तस्त्रिजगति च योगेन सरसः ।
गुह स्वामिन्नन्तर्दहरयति यस्त्वां तु कलयन्
जहन्मायो जीवन्भवति स विमुक्तः पटुमतिः ।। २३

शिवस्वामिन् गौरीप्रियसुत मयूरासन गुहे-
त्यमून्युक्त्वा नामान्यखिलदुरितौघान् क्षपयति ।
इहासौ लोके तु प्रबलविभवस्सन् सुविचरन्
विमानारूढोऽन्ते तव भजति लोकं निरुपमम् ।। २४

तव श्रीमन्मूर्तिं कलयितुमनीशोऽहमधुना
भवत्पादाम्भोजं भवभयहरं नौमि शरणम् ।
अतः सत्याद्रीश प्रमथगणनाथात्मज विभो
गुह स्वामिन् दीने वितनु मयि कारुण्यमनिशम् ।। २५

भवायानन्दाब्धे श्रुतिनिकरमूलार्थमखिलं
निगृह्य व्याहर्तुं कमलजमसक्तं तु सहसा ।
ब्रुवाणस्त्वं स्वामिक्षितिधरपते[1] देशिकगुरो
गुह स्वामिन्दीने मयि वितनु कारुण्यमनिशम् ।। २६

अगस्त्यप्रष्ठानां अमलहृदयाब्जैकनिलयं
सकृद्वा न ध्यातं पदकमलयुग्मं तव मया ।
तथापि श्रीजन्ति[2] स्थलनिलय देवेश वरद
गुह स्वामिन्दीने मयि वितनु कारुण्यमनिशम् ।। २७

रणे हत्वा शक्त्या सकलदनुजांस्तारकमुखान्
हरिब्रह्मेन्द्राणामपि सुरमुनीनां भुवि नृणाम् ।
मुदं कुर्वाणः श्रीशिवशिखरिनाथ[3] त्वमखिलां
गुह स्वामिन् दीने मयि वितनु कारुण्यमनिशम् ।। २८

---

*1. ஸ்வாமிமலை 2. திருச்செந்தூர் 3. சிவகிரி*

शरद्राकाजैवातृक विमलषड्वक्त्रविलसद्-
द्विषड्बाहो शक्त्या विदलितमहाक्रौञ्चशिखरिन्।
हृदावास श्री हल्लकगिरिपते सर्वविदुषां
गुह स्वामिन्दीने मयि वितनु कारुण्यमनिशम्॥ २९

महान्तं केकीन्द्रं वरद सहसाऽऽरुह्य दिविषद्-
गणानां सर्वेषामभयद मुनीनां च भजताम्।
वलारातेः कन्यारमण बहुपुण्याचलपते
गुह स्वामिन्दीने मयि वितनु कारुण्यमनिशम्॥ ३०

महद्ब्रह्मानन्दं परशिवगुरुं सन्ततलसत्-
तटित्कोटिप्रख्यं सकलदुरितार्तिघ्नममलम्।
हरिब्रह्मेन्द्रामरगणनमस्कार्यचरणं
गुहं श्रीसङ्गीतप्रियमहमन्तर्हृदि भजे॥ ३१

* * *

॥ श्रीः ॥

# श्री सुब्रह्मण्यमङ्गलस्तोत्रम्

मङ्गलं देवदेवाय राजराजाय मङ्गलम्।
मङ्गलं नाथनाथाय कालकालाय मङ्गलम्॥ १

मङ्गलं कार्तिकेयाय गङ्गापुत्राय मङ्गलम्।
मङ्गलं जिष्णुजेशाय वल्लीनाथाय मङ्गलम्॥ २

मङ्गलं शंभुपुत्राय जयन्तीशाय मङ्गलम्।
मङ्गलं सुकुमाराय सुब्रह्मण्याय मङ्गलम्॥ ३

मङ्गलं तारकजिते गणनाथाय मङ्गलम्।
मङ्गलं शक्तिहस्ताय वह्निजाताय मङ्गलम्॥ ४

मङ्गलं बाहुलेयाय महासेनाय मङ्गलम् ।
मङ्गलं स्वामिनाथाय मङ्गलं शरजन्मने ॥ ५

अष्टनेत्रपुरीशाय[1] षण्मुखायास्तु मङ्गलम् ।
कमलासनवागीशवरदायास्तु मङ्गलम् ॥ ६

श्रीगौरीगर्भजाताय श्रीकण्ठतनयाय च ।
श्रीकान्तभागिनेयाय श्रीमत्स्कन्दाय मङ्गलम् ॥ ७

श्रीवल्लीरमणायाथ श्रीकुमाराय मङ्गलम् ।
श्रीदेवसेनाकान्ताय श्री विशाखाय मङ्गलम् ॥ ८

मङ्गलं पुण्यरूपाय पुण्यश्लोकाय मङ्गलम् ।
मङ्गलं पुण्ययशसे मङ्गलं पुण्यतेजसे ॥ ९

* * *

# श्री सुब्रह्मण्यमङ्गलाष्टकम्

शिवयोस्तनुजायास्तु श्रितमन्दारशाखिने ।
शिखिवर्यतुरङ्गाय सुब्रह्मण्याय मङ्गलम् ॥ १

भक्ताभीष्टप्रदायास्तु भवरोगविनाशिने ।
राजराजादिवन्द्याय रणधीराय मङ्गलम् ॥ २

शूरपद्मादिदैतेयतमिस्रकुलभानवे ।
तारकासुरकालाय बालकायास्तु मङ्गलम् ॥ ३

वल्लीवदनराजीव मधुपाय महात्मने ।
उल्लसन्मणिकोटीरभासुरायास्तु मङ्गलम् ॥ ४

कन्दर्पकोटिलावण्यनिधये कामदायिने ।
कुलिशायुधहस्ताय कुमारायास्तु मङ्गलम् ॥ ५

मुक्ताहारलसत्कण्ठराजये मुक्तिदायिने ।
देवसेनासमेताय दैवतायास्तु मङ्गलम् ॥ ६

1. எண்கண்

कनकाम्बरसंशोभिकटये कलिहारिणे।
कमलापतिवन्द्याय कार्तिकेयाय मङ्गलम्॥ ७

शरकाननजाताय शूराय शुभदायिने।
शीतभानुसमास्याय शरण्यायास्तु मङ्गलम्॥ ८

मङ्गलाष्टकमेतद्ये महासेनस्य मानवाः।
पठन्ति प्रत्यहं भक्त्या प्राप्नुयुस्ते परां श्रियम्॥ ९

* * *

॥ श्रीः ॥

# जयस्कन्दस्तोत्रम्

जय देवेन्द्रजाकान्त जय मृत्युञ्जयात्मज।
जय शैलेन्द्रजासूनो जय शम्भुगणावृत॥ १

जय तारकदर्पघ्न जय विघ्नेश्वरानुज।
जय देवेन्द्रजामातः जय पङ्कजलोचन॥ २

जय शङ्करसंभूत जय पद्मासनार्चित।
जय दाक्षायणीसूनो जय काशवनोद्भव॥ ३

जय भागीरथीसूनो जय पावकसंभव।
जय पद्मजगर्वघ्न जय वैकुण्ठपूजित॥ ४

जय भक्तेष्टवरद जय भक्तार्तिभञ्जन।
जय भक्तपराधीन जय भक्तप्रपूजित॥ ५

जय धर्मवतां श्रेष्ठ जय दारिद्र्यनाशन।
जय बुद्धिमतां श्रेष्ठ जय नारदसन्नुत॥ ६

जय भोगीश्वराधीश जय तुम्बुरुसेवित।
जय षट्तारकाराध्य जय वल्लीमनोहर॥ ७

जय योगसमाराध्य जय सुन्दरविग्रह।
जय सौन्दर्यकूपार जय वासववन्दित॥ ८

जय षड्भावरहित जय वेदविदां वर।
जय षण्मुखदेवेश जय भो विजयी भव॥ ९

* * *

श्रीगोपालकृष्णकविविरचितम्

# श्री सुब्रह्मण्यकर्णामृतम्

शिवं नश्शार्वाणीस्तनजनितमन्दोष्णमधुरं
पयः षड्भिर्वक्त्रैरुपचितकपोलैरपि पिबन्।
हसन्हर्यश्वादींश्चिरभवसुधालुब्धधिषणान्
कुमारः पूर्वेषां कलयतु गुरूणामपि गुरुः ॥ १ ॥

विलज्जन्तामज्ञाः पुरहरकुमारस्तुतिविधौ
न जिह्मीमश्चास्मिन्नपि बहु बिभीमः कथमपि।
पुराणी वाण्येतत्सविधसरणक्लान्तचरणा
मुहुः सुब्रह्मण्योमिति न किमवादीत्प्लुतयुतम् ॥ २ ॥

कथापीयूषं तेऽसदृशरसमातृप्ति पिबतां
सतां स्तोकास्वादा शरभवमुधा नूतनसुधा।
जनश्रुत्यामेवं परिवृतजगत्यां च बहुधा
प्रवर्तेरन् के वा न तव विततेऽपि स्तवपथे ॥ ३ ॥

अभीष्टं याचत्सु द्रुहिणहरिवाहादिषु पुरो
यतस्त्रातुं प्राप्तो ननु भवसि मामेव झटिति।
ततस्ते पादाब्जं परिवहतु तान्तं मम मतिः
प्रपञ्चे विख्याता ध्रुवमुपकृतौ प्रत्युपकृतिः ॥ ४ ॥

सकृन्नत्वा हि त्वां भजति कुटिलो वाऽप्यभिमतं
तथापि क्लिश्नाति प्रकृतिगहने कर्मविपिने।
जनोऽस्मिन्को हेतुर्भवति न विजाने त्रिभुवने
न चोल्लंघ्या दैवी सरणिरिह केनापि विषमा ॥ ५ ॥

वचोबाला यस्यामलगुणमनीषासहचरी
रहस्स्थाने ध्याने विहरति तवांघ्रिप्रणयिना ।
स सन्तोषाम्भोधेरधिजठरमामज्जति चिरं
निजापत्यामोदादपि च परितोषो जगति कः ।। ६ ।।

मया ते विक्रीतश्चलहृदयदूतः पदतटी-
निषेवार्थं स्वार्थं बहुकृप कृपामाप्य भवतः ।
समीकृत्य स्वार्थे घटनमुचितं तेऽस्य चलतो
विधिर्विक्रेतुर्मे ध्रुवमवगुणाच्छादनमपि ।। ७ ।।

दुराराध्याः साध्याः कथमिव भवेयुर्मखभुजः
पदं ते पूर्वेषां वचसामप्यविषयः ।
शुचा क्रूरेऽपारे भवजलधिपूरे परिपतन्
निरालम्बो लम्बोदरसहज कं यामि शरणम् ।। ८ ।।

समाधानैर्ध्यानैर्बहुविधविधानैरपि शुचीन्
परित्रातुं शक्ता जगति विबुधास्सन्ति बहुधा ।
अपि त्याज्यान्व्रात्याधमपतितपाषण्डपिशुनैः
परित्रातुं शक्तस्त्वमिव जगति त्वं प्रभवसि ।। ९ ।।

तवाधाराच्छूरासुरदमन सर्वामरवरान्
तृणाग्रेभ्यो मत्वा सुखमवसमाजन्मदिवसम् ।
विलम्बश्चेदद्याप्यहह तव देवास्मदवने
कुमारत्वं ख्यातं तव सदसि जायेत महताम् ।। १० ।।

सदा सेवं सेवं सुरपरिबृढत्वाध्यवसितान्
परिश्रान्तेरन्यत्फलमहमवापं न किमपि ।
इदानीं त्वत्पादव्यतिषजित कर्मव्रजममुं
परित्रायञ्छंभोः प्रकटय सुतत्वं तव विभो ।। ११ ।।

पुरः प्रादुर्भूत्वा न भवसि भवांश्चेन्मम मुदे
कुमार प्रक्रीडन् झटिति गळति ख्यातिरनघा।
पुनः प्राप्तुं नेदक्किल मिषति कालस्तव मनाग्
इयं ते विज्ञप्तिः पुनरपि पुनस्ते पुनरपि ॥ १२ ॥

मयि क्रोशत्येवं सपदि न दयां यद्वितनुषे
निदानं किं तत्र ज्वलनजनिमत्त्वं नु भवतः ।
उताद्रेः कन्यायाः कठिनजठरान्तर्विलुठनं
न वै जाने म्लानेप्सितकुशलयोनेऽल्पधिषणः ॥१३॥

अयं ते भद्रास्यै कतिचन समाधीन्शुभधियो
जयं ते कामादेर्विदधति शमाद्यैः प्रहरणैः ।
स्मयन्ते यागाद्यैः कतिचन विधानैरुपचितैः
वयं तेषु श्रान्तास्तव विरचयामोऽञ्जलिममुम् ॥१४॥

नगास्ते पञ्चत्वं दधति जडतां दैवतमणिः
पशुत्वं सा धेनुस्तव चरणदातृत्वयशसा।
विना तं त्वां को नु स्पृहयति धनान्धान्नरपशून्
समाराद्धुं धीमानिह जगति सर्वामरगुरो ॥ १५ ॥

श्रुतेर्वञ्ज्ञायन्ते प्रथममतिथीनां किल कथाः
यमायन्ते देहि त्वमिति लिपयो यस्य कुधियः ।
कुरुक्षेत्रायन्ते नटविटसमाजाः सगणिकाः
कथं नाथन्त्येनं त्वयि सति जगन्नाथ कृपणाः ॥१६॥

विधत्तां व्यासङ्गं सरसिजभवः श्रौतशिखरे
समाधत्तां निद्रां जलधिजठरे श्रीपतिरपि।
समेधन्तां लीलानटनचटुला धूर्जटिकृताः
विधीयन्ते दीक्षा गुहचरणधूल्यास्मदवने ॥ १७ ॥

प्रतिष्ठन्तां सार्धं सपदि मधुमत्या दिविषदो
न चाद्याकांक्षामस्तदनुसरणं तत्कृतफलम् ।
अपाङ्गाः स्वर्गङ्गाचटुलतरवीचीसहचराः
तिरश्चक्रुस्तृष्णाकलितपरितापं मम विभोः ॥ १८ ॥

नमस्ते स्वर्धेनोऽमरपुरतरुभ्योऽञ्जलिरियं
नमश्चिन्तारत्नापसरत यथायातमधुना ।
प्रसादे सेनान्यस्सति जगति कः प्रार्थयति वः
सुधासिन्धोस्तीरे कथमिव भवेत्काञ्जिककथा ॥ १९ ॥

स्वपादस्मर्तारं सपदि कलयन्नात्मसदृशं
पुनस्तोषाभावान्मृगयति वरं दातुमपरम् ।
यदाख्यापीयूषं पिबति सवने दिव्यपरिषत्
स सुब्रह्मण्यो नः स्फुरति पुरतः पूर्णकरुणः ॥ २० ॥

प्रभावस्मिन्दीक्षां वहति मम रक्षाध्वरविधौ
लभन्ते शोकाग्नौ सपदि पशुतां शात्रवजनाः ।
भजन्ते मोदाब्धाववभृथविधां बन्धुनिवहाः
दिवान्धाश्चक्राङ्गाः कथमिव समानप्रकृतयः ॥ २१ ॥

सुपर्याप्ता गोप्तुं जनमतिविपन्नं सुरगणाः
पटीयान् रेणुर्वा गुहचरणपाथोजमथितः ।
न सन्दिग्धेऽद्यास्मान् जगति जनतालोक्य तव तद्-
रजोलेशप्राप्ताखिलसुरवराकाङ्क्षितशिवान् ॥ २२ ॥

चिरं भ्रामं भ्रामं क्वचन मरुदेशे भवमिषे
परिश्रान्ताः शान्ताः शृणुत वचनं किञ्चन शिशोः ।
समाप्यैतत्सर्वं सपदि विधिवाक्यादधिगतं
पदे भूमानन्दे ददत हृदयं धूर्जटिभुवः ॥ २३ ॥

प्रियच्छायापायांस्त्यजत कुशलायातिमहते
फलायामोहायार्जयत सदुपायानपि च वः ।
उमादायादाङ्घ्रेरतिभयदमायामयमयात्
अपायादुद्धर्ता न भवति परस्त्विर्नन्नु शपे ॥ २४ ॥

अभूम प्रागेते वयममितकाङ्क्षाजलनिधौ
अहो मज्जं मज्जं भृशमलभमानास्तटभुवम् ।
इदानीं स्वाराज्यं तृणमपि समं यच्चरणजात्
प्रसादात्पश्यामः किमिह वरयामोऽद्य वरदम् ॥२५॥

पतन्ती रुद्राद्रेः श्रुतिभुवि गळन्ती श्रितरुजो
दळन्ती शूरादीनपि परिकृषन्ती तटतरून् ।
हरन्ती सन्तापान्पुनरपि पुनन्ती स्मृतिवशात्
स्रवन्ती काप्येषा विलसति वहन्ती मम पुरः ॥ २६ ॥

अतिक्रूरोऽरातिष्वमितशमपूरो मुनिजने
कठोरो वीरत्वे कुसुमसुकुमारोऽपि हृदये ।
रुचोद्यत्सूरोऽसावमृतकरपूरोऽपहसिते
सुमन्दारोऽस्माकं जयति स कुमारो गिरिभुवः ॥२७॥

नमोवाकं ब्रूमो नयनरमणीयाय शिवयोः
तदङ्कालङ्कारं कमपि विदधानाय च मुहुः ।
तयोः प्रेमाम्भोधेः शरदुदितराकाशशभृते
परस्मै कस्मैचित्त्रियुगवदनायादिमहसे ॥ २८ ॥

तुलाकोटिकाणस्फुरणललिताभ्यां त्रिजगतां
परं पित्रोर्नेत्रोत्सवदनटनाभ्यां च कृतिनाम् ।
मनोहर्म्ये राजत्कनककलशाभ्यां श्रुतिशिरो-
विमृग्याभ्यां पद्भ्यां नतसुरतरुभ्यां नतिरियम् ॥२९॥

कणद्भ्यां पाणिभ्यां रणितचरणाभ्यां मणितले
स्खलद्भ्यां जानुभ्यां कलितगमनं सार्धवचनम्।
अनाद्योर्दंपत्योः सुकृतमिव मूर्तं नयनयोः
अदृष्ट्वेदं तेजः कथमिव कृती खल्विह जनः ॥ ३० ॥

पायात्कुशल करण्डः पुष्करमालापरीवृतशिखण्डः।
ताडिततामसषण्डः तारकतामिस्रतरुणमार्ताण्डः ॥३१ ॥

नेत्रीभूतः शिवयोः कश्चन पत्रीकृतोरगाहारः।
पात्रीभवतु पुरो मे धात्रीकृतकृत्तिकोऽक्षियुगळस्य ॥ ३२ ॥

अंभोजपत्रनेत्रः कुम्भोद्भूतादितामरसमित्रः।
शंभोः प्रमोदपुत्रः स्तंभो जगतां समेधतां चित्रः ॥ ३३ ॥

क्षन्ता नतमन्तूनां गन्ता गजराजमदभरं भञ्जन्।
कान्त्या कनकनियन्ता क्रौञ्चनिहन्ता कदा नु हृदि रन्ता ॥

निगमशिखरालवालो वल्लीमल्लीलताश्रितस्कन्धः।
कश्चन सुरसालो नो वृश्चतु पाश्चात्यजन्मसन्तापम्॥ ३५ ॥

शासितदैत्यकदम्बः शमधनचेतस्तटाककादम्बः।
आसीन्ममावलम्बः शक्रतनूजालसाक्ष्यळिकदम्बः ॥ ३६ ॥

यज्ञावघुष्टनामा प्राज्ञालापाभिरामगुणसीमा।
परमेश्वरयोः प्रेमालंकृतसामा ममास्तु शुभभूमा ॥ ३७ ॥

सनकादिसिद्धसेव्यो जनको जगतां शिवङ्करःशिवयोः।
कनकद्रवनीकाशः शनकैः शनकैरुदेति पुरतो नः ॥ ३८ ॥

षण्मुख ! मुखजितशशधर ! धरजाङ्कवास ! वासवाद्यर्च्य।
अर्चिष्मदधिककान्ते कान्ते जगतां पदे विधेह्यस्मान्॥३९॥

कञ्जभववचनगेहं काञ्चनसहकारिकिरणसन्दोहम्।
श्रितरक्षासन्नाहं शिवयोर्मूर्तं श्रयामहे स्नेहम्॥ ४० ॥

वन्देमहि मन्देहासुर हरसन्देहदायिदेहरुचिम्।
कुरुविन्द कान्तिचेलं बालं शिवयोः किमन्यदवशिष्टम्॥ ४१ ॥

मण्डितवेदशिखण्डैः खण्डितदनुजौघचण्डभुजदण्डैः।
चण्डीश भाग्यषण्डैः दण्डितदुरितोऽस्मि मङ्गलकरण्डैः ॥ ४२ ॥

पुल्लारविन्ददाम्ना कल्हाराद्रीन्द्रशृङ्गकृतधाम्ना।
नाम्ना रञ्जितसाम्ना केनचिदाराजि मङ्गलमहिम्ना॥ ४३ ॥

अलमलमशक्तिहस्तैः अमुकुटमस्तैरवेदविन्यस्तै :।
भक्तानामसमस्तैः अपरैरमहेश्वराङ्कतलशास्तैः ॥ ४४ ॥

दूराददाहि दुरितं शूराद्यसुरौघतूलदहनेन।
सारेण केनचिन्मे मारारातेर्गृहस्थभावस्य॥ ४५ ॥

आशास्महे सदा वयमाशाधीशोच्चमौलिपीठाय।
श्रुतिचूडोत्तंसाय प्रमथाधीशात्मजांघ्रिकमलाय॥ ४६ ॥

आम्नायशिखरवेद्यादानतसल्लोकभवरुजां वैद्यात्।
आद्याच्चराचराणां हृद्यात्पित्रोः किमन्यदवलम्बे॥ ४७ ॥

अमराभयङ्कराणां तिमिरारीणामपाङ्गसुषमासु।
चमराणां श्रुतिवन्या वयमिह दासाश्विदिन्दुकिरणानाम्॥ ४८ ॥

पर्यासचन्द्रवदने पर्वतपुत्रीशुभाङ्कमणिसदने।
परिहृतसुरारिकदने मदने वल्ल्या मनोऽवलग्नं नः ॥ ४९ ॥

तरुणारुणकिरणावळिपरिणामस्फुरणचरणतरुणाब्जे।
चरणायुधध्वजेऽहं करुणाम्भोधौ निमग्नभावोऽस्मि॥५०॥

यस्मिंस्त्रेधा विलसति मृषा जागती वृत्तिरेषा
यस्य स्फूर्त्यां व्रजति सहसा चिन्मयी तन्मयीत्वम्।
योऽस्तं याते स्फुरति हृदये निर्विकल्पे समाधौ
प्रेमासारः परमशिवयोः सोऽस्तु नस्तापशान्त्यै॥ ५१॥

यस्यैकांशाज्जगति सकलाः प्राणिनः प्राणवन्तः
यस्याख्याने निगमशिखरं नाप कां कामवस्थाम्।
नान्तश्शोको भवति भजतां यस्य लेशोपलब्धेः
प्रेमासारः परमशिवयोः सोऽस्तु नस्तापशान्त्यै॥ ५२॥

क्लान्ताः क्लान्ता यमनु निगमाः सञ्चिरन्ते गिरं ते
यन्निर्णेतुं सपदि मुनयः साध्वसं ते लभन्ते।
मौनेनैवाभिनयति जगद्देशिको यस्य तत्त्वं
प्रेमासारः परमशिवयोः सोऽस्तु नस्तापशान्त्यै॥ ५३॥

यस्यावास्त्यै शमधनततिर्याति नानापथेन
प्राप्तो यो यैर्जगति विरळाः सर्वथा सर्वदा ते।
यः प्राप्येताश्रितशमदमैः संयमे स्वात्मरूपः
प्रेमासारः परमशिवयोः सोऽस्तु नस्तापशान्त्यै॥ ५४॥

नाशापाशाकुलितमनसां भासते यत्प्रभावो-
ऽप्यात्माधारं निखिलकरणं नेक्षते यं परात्त्वात्।
जानन्तेऽन्ये क्वचन समये यन्मयानेव सर्वान्
प्रणासारः परमशिवयोः सोऽस्तु नस्तापशान्त्यै॥ ५५॥

प्राणापानौ गलितगमनौ यत्र यत्रान्तरङ्गं
निर्व्यासङ्गं निखिलकरणं यत्र लुप्तप्रमाणम्।
तत्रासीना ददृशुरपरे भासुरान्यत्प्रसादान्
प्रेमासारः परमशिवयोः सोऽस्तु नस्तापशान्त्यै॥ ५६॥

किं नीहारः किममृतकरः किं रविः किं नु धूमः
 किं खद्योतः किमु हुतवहः किं तटित् किं नु हीरः ।
इत्युल्लेख्यो भवति यमिभिर्यत्प्रसादः समाधौ
 प्रेमासारः परमशिवयोः सोऽस्तु नस्तापशान्त्यै ॥ ५७ ॥

मूलाधारे हृदि मणिपुरे स्वास्पदे तालुमूले
 चेतस्स्थाने ध्रुवशशिगृहे नैकधा सिद्धिलुब्धाः ।
यं कुर्वन्तः सपदि कृतिनः स्वेप्सितान्याप्नुवन्ति
 प्रेमासारः परमशिवयोः सोऽस्तु नस्तापशान्त्यै ॥ ५८ ॥

ब्राह्मीं ग्रन्थिं प्रथममथ तां वैष्णवीं तां च रौद्रीं
 भित्त्वा केचिन्नियतमरुदाबद्धचेतश्शलाक्या ।
प्रौढोन्मन्यास्सुरतसमये यत्स्वरूपा भवन्ति
 प्रेमासारः परमशिवयोः सोऽस्तु नस्तापशान्त्यै ॥ ५९ ॥

मुग्धस्मेराननकमलया नागराजन्यपुत्र्या
 सौधे ज्योत्स्नास्फुरणविशदे निर्भयं केऽपि रन्त्वा ।
पादाब्जीयां मधुरमधुरां यस्य माध्वीं पिबन्ति
 प्रेमासारः परमशिवयोः सोऽस्तु नस्तापशान्त्यै ॥ ६० ॥

उत्तिष्ठन्त्यामुरगयुवतौ मञ्जुमञ्जीरनादं
 मन्दं मन्दं मुखसरसिजं मुक्तिमादर्शयन्तीम् ।
आलिङ्गन्तं सुलभमितरे यत्कृपापाङ्गसङ्गात्
 प्रेमासारः परमशिवयोः सोऽस्तु नस्तापशान्त्यै ॥ ६१ ॥

प्राज्ये राज्ये कलितहृदयाः केऽपि केऽप्यध्वराज्ये
 योगैश्वर्ये कतिचन निजावाप्तिसौख्येऽपि केऽपि ।
संप्राप्तेष्टास्सपदि सकला यत्कृपापाङ्गसङ्गात्
 प्रेमासारः परमशिवयोः सोऽस्तु नस्तापशान्त्यै ॥ ६२ ॥

तारं तारं भवजलनिधेर्यन्मनोरग्रभागे
निक्षिप्यान्ये शरवणभवेत्यन्तरेवालपन्तः ।
आलिङ्गन्ते स्वयमुपनतां मुक्तिकान्तां प्रसन्नां
प्रेमासारः परमशिवयोः सोऽस्तु नस्तापशान्त्यै ॥ ६३ ॥

मायानूरुर्मनुवररविर्देशिकेन्द्रो दयार्द्रः
उद्यन्नेनस्तिमिरपटलीं शोचयन्शोकघूकान् ।
यस्यानन्दं दिशति परमं भक्तकोकावलीनां
प्रेमासारः परमशिवयोः सोऽस्तु नस्तापशन्त्यै ॥ ६४ ॥

यन्मन्त्रस्यामरपुरतरोः काममूलस्य मूले
तिष्ठन्तो ये निखिलतरुणीनेत्रनीलोत्पलानाम् ।
जायन्ते तेऽप्यमृतरुचयो मूर्तिमन्तश्च कामाः
प्रेमासारः परमशिवयोः सोऽस्तु नस्तापशान्त्यै ॥ ६५ ॥

वागास्वाद्या मनुनवसुधा लिह्यते यैर्यदीया
तेषां वक्त्राद्वहति कविताकैतवात्स्वः स्रवन्ती ।
किञ्चाशेषं भुवनमयते दासतामीक्ष्यमाणं
प्रेमासारः परमशिवयोः सोऽस्तु नस्तापशान्त्यै ॥ ६६ ॥

यन्मन्त्रेन्दुर्जलधितनयाज्योत्स्नया द्योत्यमानः
चित्ताकाशे स्फुरति विमले यस्य तस्योत्तमस्य ।
आपत्तापः प्रशममयते वृद्धिमामोदसिन्धुः
प्रेमासारः परमशिवयोः सोऽस्तु नस्तापशान्त्यै ॥ ६७ ॥

मन्त्राकाराममरतटिनीं चन्द्रशैलाद्वहन्तीं
यस्याचार्यप्रसृमरकृपासारपीयूषपूराम् ।
दिष्ट्या दृष्ट्या जगति विषयीकुर्वतां काभितापाः
प्रेमासारः परमशिवयोः सोऽस्तु नस्तापशान्त्यै ॥ ६८ ॥

त्रेधा साध्यं ज्वलनललनावर्मपाशाङ्कुशादीन्
शिष्टादिष्टे वपुषि विदधन् यन्मनोः कामधेनो : ।
दुग्धं दुग्धं पिबति कुशलं स्वेष्टमायासशून्यं
प्रेमासारः परमशिवयोः सोऽस्तु नस्तापशान्त्यै ॥ ६९ ॥

षट्त्रिंशारैस्सहितमनुभिर्नागपत्रैस्सवीरैः
साङ्घ्रिः पर्णैःसकमलवरास्त्रादिभिर्वृत्तभौमैः ।
युक्तं यन्त्रं दिशति भजतां यस्य सर्वान्पुमर्थान्
प्रेमासारः परमशिवयोः सोऽस्तु नस्तापशान्त्यै ॥ ७० ॥

नाकाधीशविरोधिवामनयनाकोकावळीविस्फुर-
च्छोकांभोनिधिशारदाभ्रविलसद्राकानिशानायकम् ।
केकामञ्जुलपक्षिपुङ्गवरथं पाकारिजाकामुकं
प्राकारं दृढमाश्रये दिविषदामेकाक्षरार्थं परम् ॥ ७१ ॥

पाराशर्यवचःप्रपञ्चतटिनीपूरात्मकेळीलवो
दूरान्मुक्तशरप्रवाहशमितक्रूरासुरोषर्बुधः ।
माराराविवधूशुभोदरसुधावाराशिचिन्तामणिः
घोरा दुःखपरंपराः शमयतु स्मेरामृतैरद्य नः ॥ ७२ ॥

शेषाद्रीश्वरमौळिकेलिसदना भाषाधिदेव्युल्लसद्-
भाषा भूतगणामरारिपरिषद्द्वेषा परा देवता ।
एषास्तां मम मानसे शिवशिवोन्मेषा तुराषाड्भवेद्-
योषालिङ्गितविग्रहा प्रतिदिनं तोषाय भूषा श्रुतेः ॥ ७३ ॥

कान्त्या न्यकृतबालभानुसुमुखः शान्त्यादिभिस्सेवितः
क्षान्त्या काचन भूमिरेव भजतां भ्रान्त्यापदिध्मानलः ।
भान्त्याव्याजकृपारसैरभिमुखं यान्त्या दृशां मादृशां
हन्त्याधीन्यदसौ किमन्यदिह नो मान्त्यालमिन्द्रश्रिया ॥ ७४ ॥

भीमारातिवनानलस्सुरपुरीरामाभिरामाकृतिः
सामाभिष्टुतपादपद्मविभवस्सीमा दयासंपदाम्।
सोमानन्दकरः परं सुमनसां क्षेमावहप्रक्रियः
कामानेष तनोतु नः प्रतिदिनं प्रेमालसैर्वीक्षणैः ॥७५॥

आदावाहितचेतसामनुदिनं वेदावलीनां सतां
नादाविष्करणक्षणे प्रकटयन्पादारुणं पावनम्।
खेदान्खण्डयति स्म योऽतिविषमान् भेदान्धकारोदितान्
श्रीदाकाङ्क्षितसंपदं दिशतु मे मोदाकरः शूलिनः ॥ ७६ ॥

नेता धर्मपथे सदैव चरतां जेतान्यथावर्तिनां
केतावाहितकुक्कुटः प्रतिरणं वेताळसङ्घस्तुतः ।
आताम्रैर्नयनाम्बुजैर्यदि स मां शीतांशुबिम्बस्पृशैः
प्रीतान्तःकरणो निरीक्षितुमहं क्रेतास्मि शक्रश्रियाम्॥ ७७

हेलाभर्जितसर्वलोकदितिभूहालाहलेनाङ्गुली-
लीलाभिः शिवयोः प्रमोदजलधेर्वेलावलीं प्लावयन्।
ज्वालाजालजटालशक्तिविलसत्सालाभभास्वद्भुजः
खेलां नः पुरतस्तनोतु सुरराड्बालाविलोलान्तरः ॥ ७८ ॥

रंभादिस्फुरदाभिरूप्यविलसद्दंभावलोपिप्रभा-
जंभारातिसुताघनस्तनपरीरंभावगाढोरसे।
स्तंभायाखिलविष्टपस्य कुशलारंभाय नाकौकसां
शुम्भादित्रिदशारितूलहुतभुग्डिंभाय भूयो नमः ॥ ७९ ॥

क्षुद्राणां दनुजन्मनां च विनताभद्रावलीनामपि
छिद्राण्यप्रतिलभ्य बालकतया विद्रावणे दीक्षितः ।
रुद्राणीस्तननूतनामृतघटीमुद्रायितौष्ठाधरः
निद्रां द्रावयतान्ममाद्य बहुधाऽभद्रां स रुद्रात्मजः ॥ ८० ॥

भासा सारसबान्धवं नयसुधाकासारमेवाश्रये
नासाप्रीणनसायकं तनुरुचा दासायिताशाधिपम्।
या सानन्दमपेक्षते न रहसे का सात्र सोऽस्मन्मनो-
वासायाद्य कृतादरो वयमतः कासां श्रियां नाश्रयाः॥८१॥

गङ्गाविश्रुत कर्मनर्मसचिवापाङ्गामृतोर्मिच्छटा-
सङ्गामृष्टविशिष्टजनतातुङ्गाघसङ्घानलम्।
शृङ्गारोज्ज्वलकेलिसंहतिनटीरङ्गायितेन्द्रात्मजा-
नङ्गाद्वैतमुपास्महे वयममी भङ्गाय तुङ्गापदाम्॥८२॥

शान्तान्तःकरणालये वृषसुताकान्ताभिरूप्ये कृपा-
क्रान्तान्दोलितशोणलोचनदळप्रान्तावधूतापदि।
स्वान्तान्यादधते न ये शिवसुते भ्रान्तास्तु ते संशय-
श्रान्ताः सन्तु पदे पदे भवपथे किं तावता नः क्षतिः॥८३॥

स्वेक्षाधीनचराचरोदयलयो लाक्षासदृक्षच्छविः
साक्षान्निर्जरकाननक्षितिरुहः प्रेक्षावतां काङ्क्षितः।
दीक्षामद्य दधातु दातुमति मे द्राक्षासदृक्षां गिरं
रूक्षामाधिविजृम्भितां शमयितुं दाक्षायणीनन्दनः॥ ८४॥

वाचातीतपदाम्बुजातविभवं प्राचामृषीणां पुनः
नीचारिव्रजजीर्णपर्णदहनं खेचारिकेलीरथम्।
मोचामर्मकृषा मनोज्ञवचसा याचामहे कं वरं
धीचाञ्चल्यमपाकरोतु जगतामाचार्यवर्यो मम॥८५॥

संसारामयभेषजं शमदमाहिंसापराराधितं
हंसालंकृतकोमलश्रुतिशिरोत्तंसाङ्घ्रिपाथोरुहम्।
पुंसानादिमता प्रकाशितभुजाशंसापदानक्रमं
कंसारातिसुताकपोलरुचिरोच्चांसाग्रमाराध्नुमः॥८६॥

शंपासित्रिशिखादिभूषितभुजव्यापारतुष्टामर-
स्त्रीपाण्यब्जविकीर्णकल्पकुसुमश्रीपाटलाङ्घ्रिद्युतिः ।
पापात्मानुपलभ्यदिव्यनगरीभूपात्मजाकामुकः
तापान्नस्समपाकरोतु महितैः श्रीपादपद्मामृतैः ॥८७॥

बाहासञ्जिततीक्ष्णहेतिरुचिभिः स्वाहासहायो मुहुः
हाहाङ्गीकृतवन्दिभावसरणिर्वाहायिताखण्डलः ।
नीहाराद्रिसुतात्मजो दिविषदां साहाय्यकारी मृधे
दाहानाशु धुनोतु नस्सुमनसामाहाररीत्या गिरा ॥ ८८ ॥
ईशानाङ्कमनोज्ञसौधममितक्लेशान्धकारारुणं
कोशागारमपेक्षितार्थवितते: पाशायुधाराधितम् ।
काशाच्छस्मितचूर्णमोहितहृषीकेशात्मजालोलुपं
धीशान्त्यादिशुभाय सर्वविपदां नाशाय चाशास्महे ॥८९

अङ्केकल्पितदेवराजतनयं लङ्केशदर्पच्छिदं
सङ्केतालयमादिवाङ्मृगदृशां पङ्केरुहं पादयोः ।
कङ्केलिद्रुमकुञ्जकेलिसदनं तं केशवानन्दनं
किं केल्या नमतां च मुक्तिरिति चेच्छङ्केऽनलश्शीतलः ॥९०॥

सम्पातेन निजायुधस्य विलसच्छंपासनाभेर्जग-
त्किम्पाकं कलयन्तमन्तकसभासम्पातुकं तारकम् ।
कम्पाक्रान्तधिया न धर्तुमनिशं यं पारयन्ते जनाः
तं पारे तमसां स्थितं कलयतां किं पामरैः पार्थिवैः ॥ ९१

गत्या शिक्षितदृप्तसिंहगमनैः शक्त्या स्फुरद्बाहुभिः
प्रीत्या पोषितभक्तलोकनिवहैः श्रुत्यात्तबन्दिक्रमैः ।
रत्याप्तैर्निजकान्तिभिः कतिपयैरेत्यात्र यद्भूयते
तत्या किं मम सांप्रतं दिविषदां भूत्याणिमाद्यापि च ॥ ९२

कालं दैवतविद्विषां गलवलन्मालं सुरेन्द्रात्मजा-
लोलं शक्तिशिखाविदारितमहाशैलं दिवश्चारिणाम्।
सालं पादरुचाहताश्रुततमोजालं भवेद्रक्षितुं
कोऽलं नो जगतां त्रयेऽपि च परो बालं विना शूलिनः ।। ९३

घर्मान्तध्वनदभ्रविभ्रमधनुश्चर्मासिभास्वद्भुजो
वर्मालंकृतविग्रहः प्रतिदिनं शर्मापहो विद्विषाम्।
धर्माद्यर्थशुभालयो मुनिमनोभर्मासनाधिष्ठितो
नर्माणि प्रतिपद्यतां मनसि मे मर्मादिवाक्सन्ततेः ।। ९४ ।।

स्ववासिश्रमशृङ्खलाः शिथिलयन्सर्वाश्च शर्वाज्ञया
कुर्वाणो विपदः प्रकाममवनीगीर्वाणविद्वेषिणाम्।
अर्वाचीनवचस्सुदूरमहिमा दुर्वाससाभ्यर्चितो
गुर्वाज्ञावशवर्तिनो हरतु मे दुर्वारदुर्वासनाः ।। ९५ ।।

शिष्टानां विशिनष्टि तुष्टिममितां कष्टानि नष्टं नय-
त्यष्टाङ्गस्य पुरस्तनोति नयनाभीष्टान्शिशुत्वक्रमान्।
क्लिष्टाक्लिष्टगतीः पिनष्टि मनसस्तुष्टात्मनां संयमे
स्पष्टास्पष्टगिराद्य तेन शिशुना नष्टाखिलापन्मम ।। ९६ ।।

आधाराम्बुजमध्यकेलिसदनो बाधावहोऽहंकृतेः
बोधानन्दविवर्तभासुरतनुर्मेऽधिमूर्ध्नं ज्वलन्।
राधावल्लभमानितात्मविभवोऽगाधां विधत्तां श्रियं
क्रोधाधेर्विजयं शचीप्रियतमासाधारणीं च प्रथाम्।। ९७ ।।

गाढाभ्यास विनिद्रितोरगसुतालीढानिलानां सतां
गूढावासमुपेत्य चेतसि परं सोढा समस्तैनसाम्।
बाढाज्ञानपिशाचिकावृतमहामूढात्मनां दुर्लभः
षोढास्याम्बुरुहश्शुभानि जगतां वोढा विधत्तां मम ।। ९८ ।।

आगोपालविधातृतुल्यविभवे यागोपगेयप्रथे
वेगोद्भिन्नपुनर्भवांकुरमहायोगोपसर्गापदि ।
रागोत्सिक्तजनानवाप्य चरणेनागोपगीतात्मजे
भूगोळेऽभिरतिं न को नु कलयेद्रोगो न चेद्राजसः ।। ९९ ।।

ओष्ठासञ्जितलोचनाय दिविजश्रेष्ठात्मजाया जग-
ज्ज्येष्ठानङ्गविवर्तविग्रहवते प्रेष्ठाय शिष्टावने ।
गोष्ठायादिगवां ततेर्भुवनवर्षिष्ठाय सभ्यान्तरे
निष्ठायाश्रितलोचनाब्जयुगनेदिष्ठाय कुर्मोऽञ्जलिम् ।। १००

सीम्ने सद्गुणसंपदां नवमणीधाम्ने श्रितापद्द्विष-
न्नाम्ने शासितदैवतारिपरिषत्स्थेम्ने च हेम्ने श्रिया ।
व्योम्ने चिद्विमलाय सर्वजगतां धाम्ने निकेतीभव-
त्साम्नेऽनादिकुटुम्बिभाग्यलहरीभूम्ने परस्मै नमः ।। १०१ ।।

परयुवतिरतं मां शङ्कयित्वाऽप्युदासे
तदपि मदवनं ते सांप्रतं सांप्रतं हि ।
त्यजति गुरुकलत्रव्यापृतं त्वत्पिता किं
विमलकमलसंपद्द्रोहिणं रोहिणीशम् ।। १०२ ।।

परधनापहृतौ यतमाने नोचिता मयि तवेयमुपेक्षा ।
विस्मृतं किमु हिरण्यहरत्वं तत्त्वया तव विभोः श्वशुरस्य ।। १०३

अहिंसकानामिह हिंसकोऽपि न तेऽच्छिदं ब्रह्मशिरः पितेव ।
अतीव लुब्धं किमुपेक्षते मां लुब्धात्मजा सापि तवाङ्कसंस्था ।। १०४

मलिनसङ्गतिदूषितमेव मां किमु विलोकयितुं परिशङ्कसे ।
न हि भवानिव भूतपिशाचिकासदसि सन्ततमासितुमुत्सहे ।। १०५

निष्किञ्चनोऽयमिति किं ननु मय्युदासे
भिक्षाशनस्तव पिता भगवंस्तदास्ताम्।
त्वं चापि भैक्षमटसि प्रकटं फलिन्यां
तन्मां भजस्व सदृशी खलु बन्धुता नौ ॥ १०६ ॥

परिपालयितुं तवाभिकाङ्क्षा यदि दृप्तान्कृपणोत्तमाग्रवृत्त्या।
किमु कीर्तिरितस्तवाप्यपूर्वा विमला दीनदयालुतोपक्लृप्ता ॥ १०७

अङ्गीकृतं मृगशिशुं न शशी जहाति
फालं तपन्तमपि नो दहनं त्रिणेत्रः।
आशीविषं च विषमं न हि शेषशायी
तीक्ष्णस्वभावमपि मां न जहीहि पाल्यम् ॥ १०८ ॥

कण्ठे गडुर्भवति यच्छरदिन्दुकान्तेः
अर्धासनं भजति यत्सुरभोज्यलक्ष्म्याः।
आचार्यतां भजति यन्नवमल्लिकानां
आनन्दमावहति ते स्मितमेव तन्नः ॥ १०९ ॥

अथवा क्षणिकाचलालवालो गुणपुष्पः परिसेवितो द्विजेन्द्रैः।
श्रुतिमुग्धलताश्रितोऽङ्घ्रिशाखी तव दिव्यः फलतीप्सितं ममैषः ॥

किं वा विपदि विधेयं ध्येयं ते ध्यातृमङ्गलं चरणम्।
संपदि किं करणीयं भूयो भूयोऽपरोक्षणीयं तत् ॥ १११ ॥

बद्धादराः श्रितविपत्परितापशान्त्यै
दुग्धाब्धिगर्भभरितामृतवीचिवन्ध्याः।
मुग्धाब्जजन्मविफलीकरणस्वभावाः
श्रद्धालवोऽवितुममी तव मां कटाक्षाः ॥ ११२ ॥

अमृतमिव सुराणां ब्राह्मणानां त्रयीव
प्रणव इव यतीनां योगिनामुन्मनीव।
श्रुतिपथपथिकस्य श्रीमदेकं निदानं
मम तु किमपि लब्धं लुब्धकन्याभिलुब्धम्॥ ११३॥

पातय वा घातय वा पालय वा समवलोक्य लालय वा।
लब्धं तव पदयुग्मं नाहं मुञ्चामि नापि दुर्वृत्तीः॥ ११४॥

नमो नमस्ते नगदम्भभेदिन्
नमो नमस्ते निगमान्तचारिन्।
नमो नमस्ते खगराजयायिन्
नमो नमस्ते भगवन् परात्मन्॥ ११५॥

श्रीशङ्करात्मजगुणगणग्रथिता तदीय-
पादारविन्दमकरन्दकणावसिक्ता।
मोदावहा भवतु सज्जनषट्पदानां
गोपालकृष्णकविवाक् सुरपुष्पमाला॥ ११६॥

* * *

# गुहगीता

## प्रथमोऽध्यायः

### मनोविकारः

*विप्रा ऊचुः -*

सूतपुत्र महाप्राज्ञ कथकोऽसि दयाकर।
गुहगीतां च नो वक्तुं त्वमेवार्हसि चानघ॥ १

*सूत उवाच-*

कुतुकी गुहगीतायाः श्रवणे तत्परो मुनिः।
कर्मयोगी हिडिम्भं च प्रार्थयन् प्रत्यहं स्थितः॥ २
श्रान्तोऽसि किं वा श्रोतुं मे चारित्रं वच्मि सादरम्।
वदन्नेवं हिडिम्भश्चाप्यागतः पुनरेकदा॥ ३

*मुनिरुवाच -*

सत्कारं स्वीकुरुष्वाद्य गुहगीतां दयानिधे।
हिडिम्भ ब्रूहि मे वक्ता त्वमेव खलु भक्तराट्॥ ४

*हिडिम्भ उवाच -*

बहुधा सेवितः स्वामी मया भिक्षुः षडाननः।
प्रसादमकरोत् दिव्यकरुणापांगतो मयि॥ ५
तदाऽहं सभयं भक्त्या सहितः प्रणमन् गुरो।
किं त्वया निहता भिक्षो पूर्वजा मम चान्वये॥ ६
किमहं रक्षितश्चास्मि त्वया तत्कारणं वद।
न मन्ये त्वां विना ह्यन्यं मत्सन्देहनिवारकम्॥ ७

श्रीभिक्षुरुवाच -

प्रशिष्योऽसि हिडिम्भ त्वं साक्षात् शिष्यश्च पार्षदः।
हन्त ते कथयिष्यामि तत्त्वं शृणु समाहितः॥ ८

अभयं सत्वसंशुद्धिः ज्ञानयोगव्यवस्थितिः।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम्॥ ९
अहिंसा सत्यमक्रोधः त्यागश्शान्तिरपैशुनम्।
दया भूतेषुष्वलोलुप्तिः मार्दवं ह्रीरचापलम्॥ १०
तेजः क्षमा धृतिः शौचं अद्रोहो नातिमानिता।
भवन्ति संपदं दैवीं अभिजाते हिडिम्भक॥ ११
दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च।
अज्ञानं चाभिजातेषु संपदं राक्षसीं बत॥ १२
ते पूर्वजाः शूरमुख्या अभिजाताश्च राक्षसीम्।
प्रवृत्तिं च निवृत्तिं च न जानन्ति हि राक्षसाः॥ १३
न शौचं न सदाचारो न सत्यं तेषु विद्यते।
प्रभूता ह्युग्रकर्माणः क्षयाय जगतोऽहिताः॥ १४
कामोपभोगपरमाः क्रोधोपात्तबलाधिकाः।
असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्॥ १५
ईश्वरोऽहमहं भोगी कोऽन्योस्ति सदृशो मया।
यक्ष्ये दास्यामि मोदिष्ये इत्यज्ञानविमोहिताः॥ १६
मयैव निहताः पूर्वे लोकरक्षेच्छया किल।
मा शुचः संपदं दैवीं अभिजातोऽस्यनामयः॥ १७
पुण्यपुञ्जप्रभावोऽसि गुरुणा कुम्भजन्मना।
मयैव संजीवितोऽसि निहतोऽपि हिडिम्भक॥ १८
आर्तोऽसि जिज्ञासुरसि ज्ञानी चासि हिडिम्भक।
मत्सेवार्थ्यसि का चिन्ता सुखी भव निरन्तरम्॥ १९

*हिडिम्भ उवाच -*

तदा मे सद्गुरोर्भिक्षोः उक्तदिव्योपदेशतः।
मत्पूर्विकमहाभोगभाग्यवैभवसंस्मृतेः॥ २०

आनन्दबाष्पा उद्रिक्ताः साकं दुःखाश्रुभिर्बत।
निर्विण्णोऽहं स्वयं बुद्धो निश्चेष्टोस्मि ततो गुरोः ॥ २१

*भिक्षुरुवाच-*

कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम्।
गतासूनगतासूंश्च नानुशोचति तत्ववित्॥ २२
नत्वेवाहं जातु नासं न त्वं नेमे त्वदग्रजाः।
न चैव न भविष्यामः सर्वे वयमतः परम्॥ २३
देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा।
तथा देहान्तरप्राप्तिः धीरस्तत्र न मुह्यति॥ २४
अविनाशि तु तद्विद्धि येन सर्वमिदं ततम्।
विनाशमव्ययस्यास्य न कश्चित् कर्तुमर्हति॥ २५
य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम्।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते॥ २६
अच्छेद्योऽयमदाह्योऽयं अक्लेद्योऽशोष्य एव च।
नित्यस्सर्वगतः स्थाणुः अचलोऽयं सनातनः ॥ २७
अव्यक्तोऽयं अचिन्त्योऽयं अविकार्योऽयमुच्यते।
तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि॥ २८
यदिदं दृश्यते सर्वं जगत् स्थावरजंगमम्।
तत् सुषुप्ताविव स्वप्नः कल्पान्ते प्रविनश्यति॥ २९
ऋतमात्मा परं ब्रह्म सत्यमित्यादिका बुधैः।
कल्पिता व्यवहारार्थं यस्य संज्ञा महात्मनः ॥ ३०
यथा कटकशब्दार्थः पृथग्भावो न काञ्चनात्।
न हेमकटकात् तद्वत् जगत् शब्दार्थता परे॥ ३१
तेनेयमिन्द्रजाल क्रीडागतिः प्रवितन्यते।
द्रष्टुर्दृश्यस्य सत्तान्तः बन्ध इत्यभिधीयते॥ ३२

दृष्ट्वा दृश्यवशात् बद्धो दृश्याभावे विमुच्यते।
जगत्त्वमहमित्यादि सर्गात्मा दृश्यमुच्यते ॥ ३३
मनस्तेनेन्द्रजालश्रीः जगती प्रवितन्यते।
यावदेतत् संभवति तावन्मोक्षो न विद्यते ॥ ३४
ब्रह्मणा तन्यते विश्वं मनसैव स्वयंभुवा।
मनोमयमतो विश्वं यन्नाम परिदृश्यते ॥ ३५
न बाह्ये नापि हृदये सद्रूपं विद्यते मनः।
यदर्थं प्रतिभानं तत् मन इत्यभिधीयते ॥ ३६
संकल्पनं मनो विद्धि संकल्पस्तत्र विद्यते।
यत्र संकल्पनं तत्र मनोऽस्तीत्यवगम्यताम् ॥ ३७
संकल्पमनसी भिन्ने न कदाचन केनचित्।
संकल्पजाते गलिते स्वरूपमवशिष्यते ॥ ३८
अहं त्वं जगदित्यादौ प्रशान्ते दृश्यसंभ्रमे।
स्यात् तादृशी केवलता दृश्ये सत्तामुपागते ॥ ३९
महाप्रलय सम्पत्तौ ह्यसत्तां समुपागते।
अशेषदृश्ये सर्गादौ शान्तमेवावशिष्यते ॥ ४०
मनसा भाव्यमानो हि देहतां याति देहकः।
मनोविलासः संसार इति मे निश्चिता मतिः ॥ ४१
अन्तःकरणसद्भावस्त्वविद्यायाश्च संभवः।
अनेककोटिब्रह्माण्डं सर्वं मिथ्येति निश्चिनु ॥ ४२
जीवन्नेव सदा मुक्तः कृतार्थो ब्रह्मवित्तमः।
उपाधिनाशाद्ब्रह्मैव स ब्रह्माप्नोति निर्भयम् ॥ ४३
तद्ब्रह्मानन्दमद्वन्द्वं निर्गुणं सत्यचिद्घनम्।
विदित्वा स्वात्मनो रूपं मा बिभेस्त्वं कदाचन ॥ ४४

सर्वं च खल्विदं ब्रह्म नित्यं चिद्धनमक्षतम्।
कल्पनाऽन्या मनोनाम्नी विद्यते नहि काचन ॥ ४५
न जायते न म्रियते किंचिदत्र जगत्त्रये।
न च भावविकाराणां सत्ता कचन विद्यते ॥ ४६
नाहं मांसं न चास्थीनि देहादन्यः परोऽस्म्यहम्।
इति निश्चितवानन्तः क्षीणाविद्यो विमुच्यते ॥ ४७
मा भवाज्ञो भव ज्ञस्त्वं जहि संसारभावनाम्।
अनात्मन्यात्मभावेन किमज्ञ इव रोदिषि ॥ ४८
कस्तवायं जडो मूको देहो मांसमयोऽशुचिः।
यदर्थं सुखदुःखाभ्यां अवशः परिभूयसे ॥ ४९
अङ्गान्यङ्गैरिवाक्रम्य जयेदादौ स्वकं मनः।
मनसो विजयान्नान्या गतिरस्ति भवार्णवे ॥ ५०
प्रक्षीणचित्तदर्पस्य निगृहीतेन्द्रियद्विषः।
पद्मिन्य इव हेमन्ते क्षीयन्ते भोगवासनाः ॥ ५१
विवेकं परमाश्रित्य बुद्ध्या सत्यमवेक्ष्य च।
इन्द्रियारीनलं छित्वा तीर्णो भव भवार्णवात् ॥ ५२
यद्यत्करोषि सत्येन सर्वं मिथ्येति निश्चिनु।
त्वमेव परमात्मासि त्वं ब्रह्मासि न संशयः ॥ ५३
हिडिम्भ उवाच-
एवं मां बोधयन् भिक्षुः मच्छीर्षे न्यस्तहस्तकः।
पुनः प्रोवाच भगवान् करुणावारिधिः स्वयम् ॥ ५४

इति प्रथमोऽध्यायः।

# द्वितीयोऽध्यायः

## सर्वत्र समभावना

श्रीभिक्षुरुवाच -

अन्तरास्थां परित्यज्य भावश्रीं भावनामयीम्।
योऽसि सोऽसि जगत्यस्मिन् लीलया विहरानघ ॥ १

सर्वत्राहं अकर्तेति दृढभावनयाऽनया।
परमामृतनाम्नी सा समतैवावशिष्यते ॥ २

खेदोल्लासविलासेषु स्वात्मकर्तृतयैकया।
स्वसंकल्पे क्षयं याते समतैवावशिष्यते ॥ ३

समता सर्वभूतेषु यासौ सत्यपरा स्थितिः।
तस्यां अवस्थितं चित्तं न भूयो जन्मभाग्भवेत् ॥ ४

अथवा सर्वकर्तृत्वं अकर्तृत्वं तथैव च।
सर्वं त्यक्त्वा मनः पीत्वा योऽसि सोऽसि स्थिरो भव ॥ ५

शेषस्थिरसमाधानो येन त्यजसि तत्त्यज।
चिन्मनः कलनाकारं प्रकाशतिमिरादिकम् ॥ ६

वासनां वासितारं च प्राणस्पन्दनपूर्वकम्।
समूलमखिलं त्यक्त्वा व्योमसाम्यः प्रशान्तधीः ॥ ७

हृदयात्संपरित्यज्य वासनापंक्तयोऽखिलाः।
यस्तिष्ठति गतव्यग्रः स मुक्तः परमेश्वरः ॥ ८

दृष्टं द्रष्टव्यमखिलं भ्रान्तं भ्रान्त्या दिशो दश।
युक्त्या वै चरतोऽज्ञस्य संसारो गोष्पदाकृतिः ॥ ९

सबाह्याभ्यन्तरे देहे ह्यध ऊर्ध्वं च दिक्षु च।
इत आत्मा ततोऽप्यात्मा नास्त्यनात्ममयं जगत्॥ १०

न तदस्ति न यत्राहं न तदस्ति न तन्मयम्।
किमन्यत् अभिवांछामि सर्वं सच्चिन्मयं ततम्॥ ११

समस्तं खल्विदं ब्रह्म परमात्मेदमाततम्।
अहमन्यत् इदं चान्यत् इति भ्रान्तिं त्यजानघ॥ १२

ततो ब्रह्मघने नित्ये सम्भवन्ति न कल्पिताः।
न शोकोऽस्ति न मोहोऽस्ति न जराऽस्ति न जन्म च॥ १३

यदस्तीह तदेवास्ति विज्वरो भव सर्वदा।
यया प्राप्तानुभवतः सर्वत्रानभिवाञ्छनात्।
त्यागादान परित्यागी विज्वरो भव सर्वदा। १४

न वर्णाश्रमाचारधर्माः कुतस्ते न पुण्यं न पापं न धर्मोऽप्यधर्मः।
न पूज्योऽप्यपूज्यः सदाऽऽनन्दभात्त्वं परं ब्रह्म साक्षात् त्वमेवासि तात॥

*हिडिम्भ उवाच -*

एवमुक्त्वा विसृष्टोऽहं ब्रह्मसाक्षात्कृतिं ददौ।
तदादि ब्रह्मभावेन स्थितोऽहं गतकल्मषः॥ १६

ब्रह्माकाराकारितांतर्वृत्तिः कल्पितवानहम्।
सर्वं सुब्रह्मण्यमयं जगद्भाति न संशयः॥ १७

वाचामगोचरं दिव्यं मनोऽतीतं महाद्युतिम्।
तद्ब्रह्मानुभवं पूर्णानन्दं वक्तुं न शक्यते॥ १८

तूष्णीं स्थित्वा भिक्षुणा संबोधितोऽहं प्रणम्य तम्।
यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो ममा॥ १९

तवैवानुग्रहेणाहं सच्चिदानन्दमात्रकः ।
किं वा वक्तुं न शक्नोमि भगवन् तव सन्निधौ ॥ २०

एवं गद्गदया वाचाऽप्यपृच्छं भिक्षुमव्ययम् ।
कृताञ्जलिपुटो भूत्वा नमस्कृत्य पुनःपुनः ॥ २१

स्थाने भिक्षो तवोक्त्याऽहं ध्यात्वा त्वामेव सन्ततम् ।
जीवन्मुक्तोऽस्मि तादात्म्यनिश्चयादेव षण्मुख ॥ २२

वर्णाश्रमाचारधर्माः किमर्थं वेदचोदिताः ।
तैर्बद्धाः कीदृशा लोके मुक्ताः कीदृग्विधा अपि ॥ २३

श्रीभिक्षुरुवाच -

हन्त ते कथयाम्यद्य तत्वं शृणु सनातनम् ।
अविद्योपाधिनाऽशान्तप्राणिनो जगति स्थिताः ॥ २४

वर्णाश्रमादिधर्माश्च सुकृतं दुष्कृतं तथा ।
साप्यविद्याऽनेकजन्मवासनापिहिता मता ॥ २५

नादिरन्तोऽस्ति तस्यास्तु ब्रह्मज्ञानेन केवलम् ।
बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ॥ २६

सर्वं ब्रह्मैवेति मतिः स महात्मा सुदुर्लभः ।
पुराऽपृच्छदगस्त्योऽपि प्रणम्य पितरं मम ॥ २७

वर्णाश्रमादिधर्मास्तु कथंभूता विभो इति ।
तदहं संग्रहेणैव वच्मि शृणु सनातनम् ॥ २८

सहस्रशीर्षो भगवान् स्थितो नारायणाभिधः ।
क्षीराब्धौ चिन्तयन् शंभुं शंकरं शिवमव्ययम् ॥ २९

कदाचित् पंकजं दिव्यं तरुणादित्यसन्निभम् ।
तस्य सुप्तस्य देवस्य नाभ्यां जातं महत्तरम् ॥ ३०

हिरण्यगर्भो भगवान् ब्रह्मा विश्वजगत्पतिः ।
आस्थाय परमां मूर्तिं तस्मिन् पद्मे समुद्बभौ ॥ ३१

शिवाज्ञया तस्य पूर्ववासनासहितान्मुखात् ।
ब्राह्मणा ब्राह्मणस्त्रीभिः सहजाता हिडिम्भक ॥ ३२

तस्य हस्तात् सह स्त्रीभिः जज्ञिरे पृथिवीभुजः ।
ऊरुभ्यां सहिताः स्त्रीभिः जाता वैश्याः शिवाज्ञया ॥ ३३

पद्भ्यां शूद्रास्सह स्त्रीभिः जज्ञिरे शंकराज्ञया ।
स्वस्त्रीषु स्वस्वधर्मेण मार्गेणोत्थः स्वभुर्भवेत् ॥ ३४

अपरासूत्तमाज्जातः त्वनुलोमः प्रकीर्तितः ।
उत्तमास्वपराज्जातः प्रतिलोम इति स्मृतः ॥ ३५

वर्णस्त्रीषु अनुलोमेन जातस्स्यादान्तरालिकः ।
वर्णासु प्रतिलोमेन जातो व्रात्य इति स्मृतः ॥ ३६

ब्राह्मण्यां सधवायां यो ब्राह्मणेनैव मोहतः ।
जातश्चौर्येण कुण्डोऽसौ विधवायां तु गोलकः ॥ ३७

एवमेवानुलोमाश्च प्रतिलोमाश्च जातयः ।
उच्चावचप्रपंचेऽस्मिन् बह्व्यो जाता हि कामतः ॥ ३८

वर्णानामाश्रमाः प्रोक्ता मुनिभिश्च सनातनैः ।
तेषां वर्णाश्रमस्थानां वेदकिंकरता सदा ॥ ३९

चक्षुरादिप्रियाणां च भेदो लोकोपकारकः ।
तद्वद्वर्णाश्रमादीनां भेदो लोकोपकारकः ॥ ४०

षण्णां रसानां भेदोऽस्ति यथा जिह्वोपकारकः ।
तथा वर्णाश्रमादीनां भेदो लोकोपकारकः ॥ ४१

यथा भक्ष्यविशेषाणां भेदो भोक्तुः प्रयोजकः ।
तथा वर्णाश्रमादीनां भेदो लोकप्रयोजकः ॥ ४२

यथा तरुलतादीनां भेदः फलसमृद्धिदः ।
तथा वर्णाश्रमादीनां भेदः फलसमृद्धिदः ॥ ४३

यथा बहूनां लोहानां भेदः कर्मसमृद्धिदः ।
तथा वर्णाश्रमादीनां भेदः कर्मसमृद्धिदः ॥ ४४

यथा रत्नादिपाषाणभेदो गौरवदायकः ।
तथा वर्णाश्रमादीनां भेदो गौरवदायकः ॥ ४५

यथा पाकप्रभेदो हि देहस्यारोग्यदो भवेत् ।
तथा वर्णाश्रमादीनां भेदो लोकस्य सौख्यदः ॥ ४६

यथा मृगाणां भेदो हि वनस्योल्लासको भवेत् ।
तथा वर्णाश्रमादीनां भेदो लोकस्य रंजकः ॥ ४७

यथाऽलंकारभेदो हि लोकव्यावृत्तिसूचकः ।
तथा वर्णाश्रमादीनां भेदो व्यावृत्तिसूचकः ॥ ४८

यथाऽनेकायुधानां च भेदो युद्धजयप्रदः ।
तथा वर्णाश्रमादीनां भेदो ज्ञानजयप्रदः ॥ ४९

यथा बहूनां पुष्पाणां भेदो भोगसमृद्धिदः ।
तथा वर्णाश्रमादीनां भेदो धर्मसमृद्धिदः ॥ ५०

यथा शुक्लादिवर्णानां भेदः चक्षुःसुखंकरः ।
तथा वर्णाश्रमादीनां भेदो जनसुखंकरः ॥ ५१

ततो वर्णाश्रमाचारे न वैरं परिकल्पयेत् ।
यदा वर्णाश्रमादीनां शात्रवं स्यात् परस्परम् ॥ ५२

तदा लोकस्य संहारः स्वांगैर्देहस्य नाशवत् ।
वर्णानामाश्रमाणां च संकरो धर्मनाशकः ॥ ५३

मल्लोकपार्षदोऽसि त्वं ततस्त्वां शिक्षयाम्यहम् ।
यदा वर्णाश्रमादीनां यत्र लोपः प्रजायते ॥ ५४

तत्र स्थित्वा प्रसन्नस्त्वं धार्मिकावनदो भव ।
हिडिम्भ स्त्रीषु दुष्टासु जायते वर्णसंकरः ॥ ५५

स कालः कलिरित्युक्तो लोकधर्मविनाशकः ।
अट्टशूला जनपदाः शिवशूलाः चतुष्पदाः ॥ ५६

प्रमदाः केशशूलिन्यो जनकाः पाकशूलिनः ।
स्वदेहशूलिनः सर्वे प्रभवन्ति कलौ युगे ॥ ५७

तस्मात् वर्णाश्रमादीनां रक्षको भव सन्ततम् ।
व्यावहारिकलोकेऽस्मिन् इदं कार्यं त्वया शृणु ॥ ५८

सर्वेषां कर्मणा जातिः नान्यथा कल्पकोटिभिः ।
पश्वादीनां यथा जातिः जन्मनैव च नान्यथा ॥ ५९

साऽपि स्थूलस्य देहस्य भौतिकस्य न चात्मनः ।
तथापि देहेऽहंमानात् आत्मा विप्रादिसंज्ञितः ॥ ६०

स्वस्वरूपापरिज्ञानात् देहेऽहंमान आत्मनः ।
अपरिज्ञानमप्यस्य चाविद्यावासनाबलात् ॥ ६१

यस्यापरोक्षविज्ञानं अस्ति श्रीगुर्वनुग्रहात् ।
तस्य नास्ति नियोज्यत्वं इति मे निश्चिता मतिः ॥ ६२

अस्ति चेत् ब्रह्मविज्ञानं स्त्रियो वा पुरुषस्य वा।
वर्णाश्रमसमाचारः तस्य नास्त्येव सर्वदा ॥ ६३

अविज्ञायत्मविज्ञानं ये स्ववर्णाश्रमादिकान्।
त्यजन्ति मूढात्मानस्ते पतन्त्येव न संशयः ॥ ६४

हिडिम्भ निस्संशयभावतस्त्वं
दृढं भजन्मां सुविहारको भव।
मदंघ्रिभक्तस्य सदाऽस्तु निर्भयं
पुनश्च किं पृच्छसि मां महामते ॥ ६५

इति द्वितीयोऽध्यायः।

# तृतीयोऽध्यायः

## अज्ञानमूलम्

*हिडिम्भ उवाच -*

स्वामिन् रहस्यं मे ब्रूहि देवानां देहिनां विभो।
यद्भावनाबलेनैव प्राणी मोक्षमवाप्नुयात् ॥ १

श्रीभिक्षुरुवाच -

रहस्यं ते प्रवक्ष्यामि समासेन सविस्तरात्।
श्रद्धया शृणु शौरेय सर्वसिद्धिकरं परम् ॥ २

सर्वेषां कारणं साक्षात् परतत्वमवस्थितम्।
त्वगसृङ्मांसमेदोऽस्थिमज्जाषट्कौशिके स्वयम् ॥ ३

पांचभौतिकदेहेऽस्मिन् शिवश्शिवतरोऽस्म्यहम्।
शिवः पञ्चमुखोऽहन्तु षण्मुखस्तत उच्यते ॥ ४

आवयोरैक्यभावो हि मुक्तिहेतुर्हि प्राणिनाम् ।
शिवपञ्चमुखान्येव ब्रह्माण्डे पञ्चदेवताः ॥ ५

कार्यं ब्रह्मा महीभागे कार्यं विष्णुर्जलाशये ।
कार्यं रुद्रोऽग्निभागे च वाय्वंशे चेश्वरः परः ॥ ६

आकाशांशे शरीरस्य स्थितस्साक्षात् सदाशिवः ।
शरीरस्य बहिर्भागे विराडात्मा स्थितस्सदा ॥ ७

अन्तर्भागे स्वराडात्मा सम्राड्देहस्य मध्यमे ।
ज्ञानेन्द्रियेषु मनसि श्रोत्रादिषु च पञ्चसु ॥ ८

मम षड्वदनान्येव ग्लौदिग्वाय्वर्कवार्वराः ।
भूमिश्च कार्यभूताः स्युः पञ्चहस्तो गणेश्वरः ॥ ९

कर्मेन्द्रियस्वरूपश्च पादपाण्यादिषु क्रमात् ।
त्रिविक्रमेन्द्र वह्न्याख्याः कार्यभूताः प्रजापतिः ॥ १०

मित्रश्चापि तथा प्राणे सूत्रात्मा सुस्थितस्सदा ।
चतुर्मुखोऽन्तःकरणे तदवस्थासु च क्रमात् ॥ ११

चन्द्रमा मनसि प्रोक्तो बुद्धौ तु स बृहस्पतिः ।
अहंकारे च कालाग्निः रुद्रश्चित्ते शिवः स्थितः ॥ १२

भूतप्रेतपिशाचाद्याः देहस्यास्थिषु संस्थिताः ।
मज्जाख्ये पितृगन्धर्वाः रोमसु क्षुद्रदेवताः ॥ १३

सर्वाश्च राक्षसाश्चैव स्थिताः स्नायुषु सर्वशः ।
वर्तन्ते देवतास्सर्वाः देहेऽस्मिन्नेव संस्थिताः ॥ १४

त्रिमूर्तीनां तु यो ब्रह्मा तस्य घोराभिधा तनुः ।
दक्षिणाक्षिणि जन्तूनां शान्ताख्या च तनुस्तथा ॥ १५

वर्तन्ते वामनेत्रे चाप्यन्तर्भागे तयोःपुनः ।
बहिर्भागे सूर्यचन्द्रौ वर्तेते कन्धरे तथा ॥ १६

त्रिमूर्तीनां तु यो विष्णुः शान्तो घोरोऽन्ततो बहिः ।
त्रिमूर्तीनां तु यो रुद्रः शान्तो घोरोऽन्ततो बहिः ॥ १७

चिच्छक्तिः परमा देहमध्ये कुण्डलिनी स्थिता ।
मायाशक्तिर्ललाटाग्रे तन्मध्ये नादरूपिणी ॥ १८

अपरांशे बिन्दुमयी तस्य शक्तिः स्थिता स्वयम् ।
जीवात्मा बिन्दुमध्ये तु सूक्ष्मरूपः प्रकाशते ॥ १९

हृदये स्थूलरूपेण तयोर्मध्ये तु मध्यमः ।
हृन्मध्ये तु महालक्ष्मीः जिह्वायां तु सरस्वती ॥ २०

रुद्राणी सह रुद्रेण हृदये वर्तते सदा ।
ईश्वरस्सर्वत्र देहे सर्वसाक्षी सदाशिवः ॥ २१

ज्ञा सम्यक् नवतां देहे सकला देवता अमूः ।
प्रत्यगात्मतया भांति देवतारूपतोऽपि च ॥ २२

वेदमार्गैकनिष्ठानां विशुद्धानां तु विग्रहे ।
देवतारूपतो भांति न भाति प्रत्यगात्मना ॥ २३

तान्त्रिकाणां शरीरे तु वर्तन्ते न प्रकाशकाः ।
शुद्ध्यभावात् यथाजातप्रणिनां सर्वदेवताः ॥ २४

तिरोभूततया नित्यं वर्तन्ते न स्वरूपतः ।
अतश्च भोगमोक्षार्थी शरीरं देवतामयम् ॥ २५

स्वकीयं परकीयं च पूजयेत् सुविशेषतः ।
नावमानं सदा कुर्यात् मोहतो वापि बुद्धिमान् ॥ २६

यदि कुर्यात् प्रमादेन पतत्येव भवार्णवे ।
दुर्वृत्तमपि मूर्खं च पूजयेत् देवतात्मना ॥ २७

देवतारूपतः पश्यन् मुच्यते जन्मबन्धनात् ।
मोहेनापि सदा नैव कुर्यादप्रियभाषणम् ॥ २८

यदि कुर्यात् प्रमादेन हन्ति तं परदेवता।
देहे तु न क्षतं कुर्यात् अस्त्रशस्त्रनखादिभिः ॥ २९

तथा न लोहितं कुर्यात् यदि कुर्यात् पतत्यधः।
एषा सनातनी विद्या भोगमोक्षप्रदायिनी ॥ ३०

मयैव कथिता नित्या सर्वलोकोपकारिणी।
कथिताऽभूत्ते हिडिम्भ सर्वं ब्रह्ममयं जगत् ॥ ३१

ब्रह्माण्डेऽपि च पिण्डाण्डे सर्वत्र ब्रह्मभावतः।
तत्त्वमेवास्यहं चासि देवदेव सुखीभव ॥ ३२

इति तृतीयोऽध्यायः।

# चतुर्थोऽध्यायः

## ज्ञानोत्पत्तिः

*हिडिम्भ उवाच -*

संकोचो देहयात्रायां प्राणिनां अस्ति षण्मुख।
तेषु ज्ञानार्थिनां बुद्धिरुपक्षीणा भवेत्किल ॥ १

तद्धेतोः ज्ञानसम्पत्तिः देहयात्रा च दुर्लभा।
तस्यास्तस्याश्च सौलभ्यं कथं भवति सद्गुरो ॥ २

*श्रीभिक्षुरुवाच -*

हन्त तात प्रवक्ष्यामि ज्ञानोत्पत्तेस्तु कारणम्।
विना येन शिवज्ञानं न जायेत कथंचन ॥ ३

मुमुक्षुरतिसंतुष्टः सिद्ध्यत्येव गतिर्मम।
इति निश्चयबुद्धिस्तु प्रतिबन्धनिवृत्तये ॥ ४

देवतास्सकला नित्यं प्रार्थयेन्मतिमत्तमः।
अधिकारी भवेत्तत्र जन्मना कर्मणा द्विजः ॥ ५

शन्नो मित्रश्शं वरुणः शन्नो भवतु चार्यमा।
शन्न इन्द्रो बृहस्पतिः शन्नो विष्णुरुरुक्रमः ॥ ६

नमोऽस्तु ब्रह्मणे वायो नमोऽस्तु तव शोभनम्।
त्वमेव साक्षाद् ब्रह्मासि त्वां वदिष्यामि शंकरम् ॥ ७

ऋतं च सत्यं चाहं त्वां वदिष्यामि समाहितः।
तन्मामवतु कल्याणं तद्वक्तारं च शोभनम् ॥ ८

मां भूयोऽवतु वक्तारं अपि चावतु शोभनम्।
शान्तिः शान्तिः पुनः शान्तिः दोषत्रयनिवृत्तये ॥ ९

कृत्वैवं प्रार्थनां आत्मज्ञानार्थं मतिमान् सदा।
तस्य विज्ञानसंपत्तिः क्रमतो जायते ध्रुवम् ॥ १०

जपेन्नित्यं गुरोर्लब्ध्वा मन्त्रं यश्छन्दसामिति।
मे गोपायेति पर्यन्तम् ज्ञानोत्पत्तेश्च कारणम् ॥ ११

शताक्षरां च गायत्रीं जपेन्नित्यं दिने दिने।
तन्मन्त्रपूतोदकेन स्नानपानादिनाऽपि च ॥ १२

ज्ञानोत्पत्तिर्भवत्येव शिवभक्त्या च सन्ततम्।
उपायमपरं चापि ब्रवीमि शृणु सादरम् ॥ १३

गुरोर्भक्तिर्दृढा यस्य स्वतो ज्ञानं प्रजायते।
बहूनां जन्मनामन्ते गुरुभक्तिः प्रजायते ॥ १४

गुरुभक्तियुते जन्तौ ज्ञानोत्पत्तिर्न संशयः।
यथाकथंचित् स भवेत् ब्राह्मणो जायते भुवि ॥ १५

ब्राह्मणो गुरुभक्तस्तु श्रुतिज्ञानात् प्रमुच्यते।
श्रुतिप्रामाण्यबुद्धिर्हि मोक्षस्य गतिरुच्यते ॥ १६

प्रारब्धं पुष्यति वपुः इति निश्चित्य चेतसा।
धैर्यमालम्ब्य यत्नेन तूष्णीं स्थितिरपि स्वयम्॥ १७

वैदिकानां भवेद् ज्ञानजनने कारणं सदा।
संकोचो देहयात्रायां तादृशानां भवेत्खलु॥ १८

अतः संकोचहानाय चावहन्तीति मन्त्रतः।
आज्येनान्नेन चोभाभ्यां जुहुयाच्च दिने दिने॥ १९

तदशक्तः स्मरेन्नित्यं मन्त्रं वा श्रद्धया सह।
ब्रह्मचारी गृहस्थो वा वानप्रस्थश्च भिक्षुकः॥ २०

नित्यं आचार्यशुश्रूषां प्रकुर्यात् भक्तिपूर्वकम्।
प्राणिनां तादृशानां तु लोकयात्रा भवेत्स्वयम्॥ २१

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्॥ २२

अहमेव परस्साक्षात् अहमेव सदाशिवः।
अहमेव जगत्साक्षी चाहमेव जगद्गुरुः॥ २३

नित्यं लिंगे महादेवं पूजयेत् भक्तिमान्नरः।
वेदान्तश्रवणं कुर्यात् मननं च समाहितः॥ २४

रुद्राध्यायी भवेन्नित्यं रुद्राक्षाभरणो भवेत्।
भस्मत्रिपुण्ड्रधारी च ज्ञानवान्मां प्रपद्यते॥ २५

शम्भोर्ममैक्यभावो हि मायाऽविद्याविनाशकः।
उक्तसाधनसंपन्नः ज्ञानाद् भस्माधिगच्छति॥ २६

शिवस्वरूपं परमं भासनात् भस्मसंज्ञितम्।
तदेव स्वीयमायोत्थप्रपंचे जलसूर्यवत्॥ २७

अनुप्रविष्टं तद्रूपं भस्मलेशमुदाहृतम्।
तेन लेशेन देवेशः प्रतिबिम्बेन भस्मना ॥ २८

स्वतन्त्रो बिम्बभूतस्तु सदैवोद्धूलितः शिवः ।
सदैव पूजनीयस्तु ब्रह्मविष्ण्वादिभिः सुरैः ॥ २९

सोऽहं चाहं स एवास्मिन् विषये मास्तु संशयः ।
आवयोरन्तरं नास्ति तात शब्दार्थयोरिव ॥ ३०

तत्प्रसादेन सर्वेषां देवत्वं न स्वभावतः ।
स्वभावादेव देवत्वं देवदेवस्य मेऽपि च ॥ ३१

तं विदित्वा विमुच्यन्ते शान्ता दान्ता मुनीश्वराः ।
गृहस्थाश्च तथैवान्ये सत्यधर्मपरायणाः ॥ ३२

भस्मसंछन्नसर्वांगाः त्रिपुण्ड्रांकितमस्तकाः ।
रुद्राक्षमालाभरणाः श्रीषडक्षरजापकाः ॥ ३३

नित्यं देवार्चनपराः सत्क्रियादग्धकिल्बिषाः ।
एवं ज्ञानार्थिनां सम्यक् साधनानि बहूनि च ॥ ३४

सन्ति तेषां मुख्यतमानीदानीं कथितानि वै ।
ज्ञानं वेदान्तविज्ञानं ब्रह्मात्मैकत्वगोचरम् ॥ ३५

संपादनीयं तद्ज्ञानं ज्ञानान्मुच्येत बन्धनात्।
मदुक्तार्थेषु विश्वासं हिडिम्भ कुरु सन्ततम् ॥ ३६

सर्वसौलभ्यमेवाहं उपायं वच्मि सादरम्।
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ॥ ३७

अहं त्वा सर्वकष्टेभ्यो मोक्षयिष्यामि मा शुचः ।
एवमेव वचस्साक्षात् सद्गुरोः करुणामृतम् ॥ ३८

देवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन।
त्वमेव तत्र दृष्टान्तरूपोऽगस्त्यकृपोदितः ॥ ३९

इति चतुर्थोऽध्यायः।

# पंचमोऽध्यायः

## मायामोहजालम्

*हिडिम्भ उवाच-*

अहो सर्वमिदं ब्रह्म बद्धो मुक्तश्च कः पुनः।
सर्वमाश्चर्यमेव स्यात् मन्मनः क्लिश्यते प्रभो ॥ १ ॥

सद्गुरो भगवन् स्वामिन् किमर्थं जगदीदृशम्।
उच्चावचं भाति ब्रह्म मायामूलं च मे वद ॥ २ ॥

*श्रीभिक्षुरुवाच-*

मायाऽविद्या विशुद्धा चित् जीव आत्मा च वासना।
व्यावहारिकसत्तायां षडस्माकं अनादयः ॥ ३ ॥

व्यावहारिकसर्वस्वं मिथ्यैव परमार्थतः।
त्रैकालिकाबाध्यवस्तु सच्चिदानन्दलक्षणम् ॥ ४ ॥

ब्रह्मैकमेव सत्यं हि तदात्मा परिकीर्तितः।
स्वस्वरूपानुसन्धाने ज्ञाने सर्वं विलीयते ॥ ५ ॥

बद्धो मुक्त इति व्याख्या गुणतो नैव वस्तुतः।
गुणस्तु मायामूलत्वात् न ते मोक्षो न बन्धनम् ॥ ६ ॥

वक्ष्ये शृणु समासेन सर्वसाधनमुत्तमम्।
व्यावहारिकलोकानां उद्धारार्थं हिडिम्भक ॥ ७ ॥

अपेक्षितार्थः सर्वेषां भुक्तिर्मुक्तिश्च सर्वदा।
मुक्तिर्नानाविधा प्रोक्ता मया वेदानुसारतः ॥ ८ ॥

तत्र सायुज्यरूपाया मुक्तेः साक्षात्तु साधनम्।
सम्यक् ज्ञानं न कर्मोक्तं न तयोश्च समुच्चयः ॥ ९ ॥

नित्यसिद्धाऽथवा मुक्तिः साध्यरूपा द्वयोर्गतिः।
नित्यसिद्धा तु सर्वेषां आत्मरूपाऽथवाऽपरा ॥ १० ॥

आत्मरूपैव चेन्मुक्तिः नित्यप्राप्ता हि सात्मनः।
नित्यप्राप्तस्य चाप्राप्तिः विभ्रमः खलु देहिनाम् ॥ ११ ॥

विभ्रमस्य निवृत्त्या सा प्राप्तेति व्यपदिश्यते।
विभ्रमस्य निवृत्तिस्तु सिद्ध्यत्यज्ञाननाशनात् ॥ १२ ॥

अज्ञानस्य विनाशस्तु ज्ञानादेव न चान्यतः।
ज्ञानादज्ञाननाशस्तु प्रसिद्धस्सर्वदेहिनाम् ॥ १३ ॥

अपरा सा परा मुक्तिः आत्मरूपैव चेन्मतम्।
तथापि मुक्तिः प्राप्या वा नाप्राप्या वाऽऽत्मना भवेत् ॥ १४

प्राप्या चेत् आत्मना मुक्तिः अप्राप्तप्राप्तिरेव सा।
अप्राप्तप्राप्तिरप्यस्य संबन्धो वैक्यमेव च ॥ १५ ॥

स संबन्धश्च साध्यो वा नित्यो वा साध्य एव चेत्।
अनित्यस्स तु संबन्धो भवेन्नित्यो न सर्वदा ॥ १६ ॥

साध्यानामपि भावानां अनित्यत्वं व्यवस्थितम्।
अभावस्य न साध्यत्वं प्रध्वंसाख्यस्य सर्वदा ॥ १७ ॥

साध्यत्वाख्यस्तु धर्मश्च नैवाभावाश्रयो भवेत्।
नित्यो यदि स सम्बन्धः तर्हि संबन्धसंज्ञिता ॥ १८ ॥

मुक्तिश्च नित्यसिद्धैव मुमुक्षोरात्मनो भवेत्।
तथापि नित्यप्राप्ताया मुक्तेः प्राप्तिस्तु पूर्ववत्॥ १९ ॥

विज्ञानेनैव नान्येन सत्यमुक्तं चिदात्मकम्।
अप्राप्तप्राप्तिरूपाया मुक्तेरैक्यं भवेद्यदि॥ २० ॥

तन्न युक्तं द्वयोरैक्यं न सिद्ध्यति कदाचन।
भिन्नयोः भेदनाशे वा मुक्तिर्भेदे स्थितेऽथवा॥ २१ ॥

भेदनाशे तयोरैक्यं घटते नात्र संशयः।
भेदे सति भवेदैक्यं इति चेत् तन्न संगतम्॥ २२ ॥

भेदस्य सन्निधानैक्यं विरोधान्नैव सिद्ध्यति।
न प्राप्या ह्यात्मना मुक्तिः इति चेत् तन्न संगतम्॥ २३ ॥

अप्राप्यायास्तु मुक्तेश्च नास्त्यपेक्षा हि साधने।
साधने सति सा मुक्तिः अप्राप्यैव सदा खलु॥ २४ ॥

न नित्यसिद्धा सा मुक्तिः साध्यरूपैव चेन्मतम्।
साध्यत्वे सत्यनित्यत्वं पूर्वमेवाभिभाषितम्॥ २५ ॥

प्रध्वंसस्य तु नित्यत्वं सर्वशो न भविष्यति।
अचिद्रूपस्य सर्वस्य विनाशो गम्यते यतः॥ २६ ॥

भावत्वे सति साध्यत्वात् विनाशश्चेतनस्य तु।
प्रध्वंसस्य तु साध्यत्वेऽप्यभावत्वेन हेतुना॥ २७ ॥

न सिद्ध्यति विनाशश्चेत् तच्च नैव सुसंगतम्।
प्रागभावसमाख्यस्याप्यनित्यत्वस्य दर्शनात्॥ २८ ॥

प्रागभावस्य साध्यत्वाभावे सत्यप्यभावतः।
अनित्यत्वं यदिष्येत प्रध्वंसस्यापि तत्समम्॥ २९ ॥

भावानामप्यभावानां साध्यानां च हिडिम्भक।
असाध्यानां च सर्वेषां अनित्यत्वे प्रयोजकम्॥ ३० ॥

अचेतनत्वमेवोक्तं नेतरद्व्यभिचारतः।
चेतनस्य तु नित्यत्वं श्रुतिराह सनातनी॥ ३१ ॥

तस्मादुक्तप्रकारेण मुक्तिः सायुज्यरूपिणी।
ज्ञानलभ्या क्रियामात्रात् न लभ्या न समुच्चयात्॥ ३२ ॥

ज्ञानं नामाखिलं चेदं मद्रूपेणावभासनम्।
क्रिया तु कारणापेक्षा न ज्ञानालंबिनी सदा॥ ३३ ॥

अतः क्रियाया ज्ञानेन विरोधादेव सर्वदा।
समुच्चयो न युज्येत कुतस्तेन परा गति :॥ ३४ ॥

सारूप्याख्या तु सा मुक्तिः सामीप्याख्या च याऽपरा।
सालोक्याख्या च या तासां केवलं कर्म साधनम्॥ ३५ ॥

ऐहिकामुष्मिकाकारा मुक्तयः सर्वदेहिनाम्।
कर्मणैव हि सिद्ध्यन्ति न ज्ञानेन विरोधतः॥ ३६ ॥

ज्ञानं कर्म च वेदोक्तमेव नान्योदितं भवेत्।
अन्योदितं तु मन्यन्ते व्यवहारे विवेकिनाम्॥ ३७ ॥

अपेक्ष्य बुद्धिं विज्ञानं कर्म चेति विधीयते।
तयापि व्यवहारे ते व्यावहारिकसिद्धिदे॥ ३८ ॥

वेदश्शिवः शिवोऽहं वै सर्वं ब्रह्ममयं जगत्।
वेदनिन्दा न कर्तव्या ज्ञानिना यत्रकुत्रचित्॥ ३९ ॥

तस्मात्सर्वत्र नास्तिक्यं न कुर्यान्म मतिसत्तमः।
नास्तिक्यादेव सर्वेषां संसारे परिवर्तनम्॥ ४० ॥

अस्तीत्येवोपलब्धव्यः परमात्मा श्रुतेस्स्वयम्।
लीलामात्रं प्रभोर्जन्म संसारपरिवर्तनम्॥ ४१ ॥

धर्माधर्मौ पुण्यपापे प्राणिनां कर्मबन्धनम्।
भस्मसात्कुरुते ज्ञानवह्निः संसारवासनाम्॥ ४२ ॥

सर्वं त्यक्त्वैव मनसा येन त्यजसि तत्त्यज।
स्वयमेव स्वयं साक्षात् किं वक्तव्यमतः परम्॥ ४३ ॥

इति पञ्चमोऽध्यायः।

# षष्ठोऽध्यायः

## जीवब्रह्मैक्यम्

*हिडिम्भ उवाच-*

सर्वमुक्तं समासेन सद्गुरो मय्यनुग्रहात्
त्वयैवाहं ब्रह्मविच्च न मे जन्म न मे मृतिः॥ १ ॥

देहबुद्ध्या भवद्दासः जीवबुद्ध्या त्वदंशकः।
आत्मबुद्ध्या त्वमेवाहं सद्गुरोऽस्मिन् न संशयः ॥ २ ॥

अथ केन प्रयुक्तोऽहं कुर्वे कर्म जगद्गुरो।
जीवन्मुक्तः सुखी तूष्णीं स्थास्यामीत्यब्रुवं मुने॥ ३ ॥

*श्रीभिक्षुरुवाच-*

सम्यग्व्यवसिता बुद्धिः हिडिम्भ तव तात्त्विके।
अपि चेद्देहयात्रायां अवशस्त्वं हि मायया॥ ४ ॥

आधिकारिकजीवोऽसि मल्लोके पार्षदोऽसि च।
आकल्पान्तं मयाऽज्ञप्तः कर्म कर्तुं त्वमर्हसि॥ ५

ब्रह्मणा सह मुक्तिःस्यात् प्रलये तव चानघ।
कर्मतत्वं प्रवक्ष्यामि शृणु गुह्यं सनातनम्॥ ६

नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।
शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः ॥ ७

नहि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् ।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥ ८

कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।
तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥ ९

सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वं एष वोस्त्विष्टकामधुक् ॥ १०

देवान् भावयतानेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परं अवाप्स्यथ ॥ ११

इष्टान् भोगान् हि वो देवाः दास्यन्ते यज्ञभाविताः ।
तैर्दत्तानप्रदायैभ्यो यो भुंक्ते स्तेन एव सः ॥ १२

यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ।
भुञ्जन्ते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥ १३

अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसंभवः ।
यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥ १४

यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।
तदर्थं कर्म शौरेय मुक्तसंगः समाचर ॥ १५

एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।
अघायुरिन्द्रियारामो व्यर्थजीवी स एव हि ॥ १६

आत्मानं रथिनं विद्धि शरीरं रथमेव तु ।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥ १७

इन्द्रियाणि हयानाहुः विषयांस्तेषु गोचरान् ।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुः मनीषिणः ॥ १८

यस्त्वविज्ञानवान् भवति अयुक्तेन मनसा सदा।
तस्येन्द्रियाणि वश्यानि दुष्टाश्वा इव सारथेः ॥ १९

यस्तु विज्ञानवान् भवति युक्तेन मनसा सदा।
तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ॥ २०

यस्त्वविज्ञानवान् भवत्यमनस्कः सदाऽशुचिः।
न स तत्पदमाप्नोति संसारं चाधिगच्छति ॥ २१

यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः।
स तु तत्पदमाप्नोति यस्माद्भूयो न जायते ॥ २२

विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः।
सोऽध्वनः पारमाप्नोति मत्पदं परमं शिवम् ॥ २३

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः।
मनसश्च परा बुद्धिः बुद्धेरात्मा महान् परः ॥ २४

महतः परमव्यक्तं अव्यक्तात् पुरुषः परः।
पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः ॥ २५

एष सर्वेषु भूतेषु गूढः आत्मा न प्रकाशते।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥ २६

यच्छेद्वाङ्मनसी प्राज्ञः तद्यच्छेत् ज्ञान आत्मनि।
ज्ञानमात्मनि महति तद्यच्छेत् शान्त आत्मनि ॥ २७

मयि सर्वाणि कर्माणि सन्न्यस्याध्यात्मचेतसा।
असक्तो ह्याचरन् कर्म परमाप्नोति नान्यथा।
किं भवानिच्छति पुनर्निस्सन्देहो भवार्भक ॥ २८

*हिडिम्भ उवाच-*

परमात्मन् गुरो भिक्षो त्वमेवाहं गतिर्मम।
द्रष्टुमिच्छामि ते भूयो रूपं षाण्मुखमैश्वरम् ॥ २९

भवदाज्ञावशः कुर्वे त्वदिष्टं कर्म नान्यथा।
त्वत्षण्मुखत्वस्वरूपं ब्रह्म पिण्डाण्डयोः कथम्॥ ३०

*श्रीभिक्षुरुवाच -*

ज्ञानेन्द्रियमनोबुद्धिः महद्व्यक्तपूरुषः।
पिण्डाण्डे षण्मुखानीति मदीयानि विभावय॥ ३१

तदशक्तौ तु सर्वत्र ज्ञानेन्द्रियमनांसि च।
दृश्यं जगच्च ब्रह्माणं विष्णुं रुद्रं तथेश्वरम्॥ ३२

सदाशिवं शिवशतं ब्रह्माण्डे परिभावय।
पश्य मे तादृशं रूपं मल्लोके स्कन्दनामके।
मामेव शरणं गच्छ मय्यर्पितमना भव॥ ३३

*हिडिम्भ उवाच -*

इत्युक्त्वा षाण्मुखैश्वर्यरूपं धृत्वाऽथ भिक्षुकः।
स्कन्दलोकं जगामाथ सुब्रह्मण्यः शिखीन्द्रगः॥ ३४

षाण्मुखैश्वर्य ताद्रूप्यं तदानीन्तनवैभवम्।
सर्वलोकेषु सर्वेषु दृष्ट्वा मयि च विस्मितः॥ ३५

जडदेही कियत्कालं नीतोऽहं मामपि स्वयम्।
न जानेऽथ स्वयं मन्दं प्रबुद्धो व्यावहारिके॥ ३६

जगतीत्थं चरिष्यामि स्वामिप्रेरणया यथा।
गुहगीतामिमां श्रुत्वा धन्यो भवति मानवः॥ ३७

अर्थानुसन्धानपरो मुक्त एव न संशयः।
इयं चोक्ता तव मुने गुह्याद्गुह्यतरं खलु।
न चाशुश्रूषवे वाच्या नाभक्ताय कदाचन॥ ३८

इति कलिसन्तारक श्रीगुहगीतायां ब्रह्मविद्यायां
अद्वैतशास्त्रे भिक्षुरूपिगुहहिडिम्भसंवादे
जीवब्रह्मैक्यं नाम षष्ठोऽध्यायः।

॥ श्रीः ॥

# सुब्रह्मण्य सपर्याविधिः

## सुब्रह्मण्यषडक्षरमन्त्रः

अस्य श्रीसुब्रह्मण्य षडक्षर महामन्त्रस्य, अगस्त्यः ऋषिः । अनुष्टुप्छन्दः सुब्रह्मण्यो देवता । वं बीजं, नमः शक्तिः, वचद्भुवे कीलकं, श्रीसुब्रह्मण्यप्रीत्यर्थे जपे विनियोगः । करन्यासः- वां अङ्गुष्ठाभ्यां नमः । वीं तर्जनीभ्यां नमः । वूं मध्यमाभ्यां नमः । वैं अनामिकाभ्यां नमः । वौं कनिष्ठिकाभ्यां नमः । वः करतल करपृष्ठाभ्यां नमः । एवं हृदयादिन्यासः । भूर्भुवस्सुवरों इति दिग्बन्धः । ध्यानम्—

सिन्दूरारुणमिन्दुकान्तिवदनं केयूरहारादिभिः
दिव्यैराभरणैः विभूषिततनुं स्वर्गस्थसौख्यप्रदम् ।
अम्भोजाभयशक्तिकुक्कुटधरं रक्ताङ्ग रागांशुकं
सुब्रह्मण्यमुपास्महे प्रणमतां भीतिप्रणाशोद्यतम् ॥

लमित्यादि पञ्चपूजा । ओं वचद्भुवे नमः इति मन्त्रः । (१०८ वारं) अङ्गन्यासः । भूर्भुवस्सुवरोमिति दिग्विमोकः । ध्यानम् । लमित्यादि पञ्चपूजा । जपसमर्पणम् ।

सिद्धिक्रमः :—

लक्षमेकं जपेन्मन्त्रं साज्यान्नहविषा ततः ।
दशांशं जुहुयादन्ते ब्राह्मणानपि पूजयेत् ॥

*पूजाक्रमः*——

धर्मादिकल्पिते पीठे वह्निमण्डलपश्चिमे । पूजयेद्विधिना देवमुपचारैर्यथोदितैः । केसरेष्वङ्गपूजा स्यात् । पत्रमध्येषु जयन्तं आग्निवेश्यं कृत्तिकापुत्रं भूतपतिं सेनान्यं गुहं हेमशूलं विशाखं शक्तिवज्रधरं च, दिग्दलेषु पूर्वादिषु देवसेनापतिं विद्यां मेधां वज्रं च, विदिग्दलेषु शक्तिकुक्कुटौ मयूरद्विपौ, पत्राग्रेषु, तद्वाह्ये लोकेश्वरान् तदस्त्राणि च पूजयेत् । षष्ठ्यां संप्रीणयद्देवं स्वादुभिर्भक्ष्यभोज्यकैः । पूजयेद्देवताबुद्ध्या कुमारान्ब्रह्मचारिणः । पूजितस्तु स देवोऽपि सन्तानं विजयं वीर्यं राज्ञामायुः श्रियं यशः प्रदद्यात् साधकस्य सुब्रह्मण्यः सुरार्चितः ॥——मन्त्ररत्नमञ्जूषातः ।

* * *

॥ श्रीः ॥

## श्री सुब्रह्मण्यद्वादशाक्षरमन्त्रः

अथ तत्वाचमनम्— ह्रीं आत्मतत्वं शोधयामि नमः स्वाहा । क्लीं विद्यातत्वं शोधयामि नमः स्वाहा ।, ह्सौं शिवतत्वं शोधयामि नमः स्वाहा । ह्रीं क्लीं ह्सौं सर्वतत्वं शोधयामि नमः स्वाहा ॥

प्रत्यूहशान्तिः । प्राणायामः । सङ्कल्पः ।

ह्रीं अस्य श्रीसुब्रह्मण्यद्वादशाक्षरमहामन्त्रस्य अमृताकर्षणदक्षिणामूर्तिः ऋषिः । जगतीच्छन्दः । श्री प्रसन्नज्ञानसुब्रह्मण्यो देवता । ह्रीं बीजम् । ह्सौं शक्तिः । क्लीं कीलकम् । श्री प्रसन्नज्ञानसुब्रह्मण्यप्रसादसिद्ध्यर्थे जपे विनियोगः ॥

ऋष्यादिन्यासः – ह्रीं अमृताकर्षणदक्षिणामूर्तये नमः शिरसि । जगतीच्छन्दसे नमो मुखे । श्री प्रसन्नज्ञानसुब्रह्मण्याय देवतायै नमो हृदये । ह्रीं बीजाय नमो गुह्ये । ह्सौं शक्तये नमः स्तनयोः । क्लीं कीलकाय नमो नाभौ । विनियोगाय नमः सर्वाङ्गे ।। (मूलेन करौ संशोध्य)

करन्यासः– ओं अङ्गुष्ठाभ्यां नमः । ह्रीं तर्जनीभ्यां नमः । ऐं मध्यमाभ्यां नमः । क्लीं अनामिकाभ्यां नमः । ओं कनिष्ठिकाभ्यां नमः । ह्सौं करतलकरपृष्ठाभ्यां नमः ।।

अङ्गन्यासः– ओं हृदयाय नमः । ह्रीं शिरसे स्वाहा । ऐं शिखायै वषट् । क्लीं कवचाय हुं । ओं नेत्रत्रयाय वौषट् । ह्सौं अस्त्राय फट् ।। ह्रीं भूर्भुवस्सुवरों इति दिग्बन्धः । ध्यानम्—

ध्यायेत्षण्मुखमिन्दुकोटिसदृशं रत्नप्रभाशोभितं
बालार्कद्युतिषट्किरीटविलसत्केयूरहारान्वितम् ।
कर्णालम्बितकुण्डलप्रविलसद्गण्डस्थलैश्शोभितं
काञ्चीकङ्कणकिङ्किणीरवयुतं शृङ्गारसारोदयम् ।।

पञ्चोपचारपूजा— लं पृथिव्यात्मने गन्धं समर्पयामि । हं आकाशात्मने पुष्पाणि समर्पयामि । यं वाय्वात्मने धूपमाघ्रापयामि । रं अग्न्यात्मने दीपं दर्शयामि । वं अमृतात्मने अमृतं निवेदयामि । सं सर्वात्मने सर्वोपचारान् समर्पयामि ।

मूलमन्त्रः– ओं ह्रीं ऐं क्लीं ओं ह्सौं शरवणभव ।।

जपान्ते पुनर्हृदयाद्यङ्गन्यासाः । ह्रीं भूर्भुवस्सुवरों इति दिग्विमोकः । ध्यानम् । लमित्यादि पूजा । जपसमर्पणम् ।

* * *

## सुब्रह्मण्यपञ्चदशाक्षरमन्त्रः

अस्य श्रीसुब्रह्मण्यपञ्चदशाक्षरमहामन्त्रस्य, ब्रह्मा ऋषिः । गायत्री छन्दः । श्री सुब्रह्मण्यो देवता । ओं श्रीं ह्रीं क्लीं इति बीजम् । शरवणभव इति शक्तिः । ऐं ईं नं ळं सौः इति कीलकम् । श्रीसुब्रह्मण्यप्रसादसिद्ध्यर्थे जपे विनियोगः ।

(१) ओं श्रीं ह्रीं क्लीं (२) ऐं ईं नं ळं सौः (३) शरवणभव (४) ओं श्रीं ह्रीं क्लीं (५) ऐं ईं नं ळं सौः (६) शरवणभव इति करन्यासाङ्गन्यासौ । भूर्भुवस्सुवरोमिति दिग्बन्धः । ध्यानम्—

सिन्दूरारुणमिन्दुपद्मजयिभिः षड्भिर्मुखैर्भासितं
कारुण्यामृतपूरसुन्दरतरैर्भान्तं द्विषल्लोचनैः ।
बिभ्राणं वरमब्जयुग्ममभयं शक्तिद्वयं कार्मुकं
खड्गं चर्म पृषत्कमङ्कुशगदे वल्लीशमीक्षे हृदि ॥

लमित्यादि पञ्चपूजा ।

मूलमन्त्रः - ओं श्रीं ह्रीं क्लीं, ऐं ईं नं ळं सौं, शरवणभव । (१०८) अङ्गन्यासः, भूर्भुवस्सुवरोमिति दिग्विमोकः, ध्यानं, लमित्यादिपञ्चपूजा । जपसमर्पणम् ।

* * *

## श्री सुब्रह्मण्यषोडशाक्षरमन्त्रः

अस्य श्रीसुब्रह्मण्यषोडशाक्षरमहामन्त्रस्य, अमृताकर्षणदक्षिणामूर्तिः ऋषिः । गायत्री छन्दः । प्रसन्नस्कन्दो देवता । सौं बीजं, ह्रीं शक्तिः, श्रीं कीलकम् । श्री सुब्रह्मण्यप्रसादसिद्ध्यर्थे जपे विनियोगः ।

करन्यासः - *शरवणभव* परावराय ब्रह्ममयाय विद्यादेहाय अङ्गुष्ठाभ्यां नमः । *रवणभवश* ब्रह्मचर्याय तर्जनीभ्यां नमः । *वणभवशर* स्कन्दस्वामिने कुमाराय मध्यमाभ्यां नमः । *णभवशरव* ब्रह्मतेजोमयाय अनामिकाभ्यां नमः । *भवशरवण* द्वादशनेत्राय कनिष्ठिकाभ्यां नमः । *वशरवणभ* ब्रह्मरुद्रतेजोमयाय करतलकरपृष्ठाभ्यां नमः । एवं हृदयादि न्यासः । भूर्भुवस्सुवरों इति दिग्बन्धः। ध्यानम्—

सिन्दूरारुणमिन्दुकान्तिवदनं केयूरहारादिभिः
दिव्यैराभरणैर्विभूषिततनुं स्वर्गादिसौख्यप्रदम् ।
अम्भोजाभयशक्तिकुक्कुटधरं सर्वाङ्गतेजोमयं
सुब्रह्मण्यमुपास्महे प्रणमतां सर्वार्थसिद्धिप्रदम् ।।

शक्तिहस्तं विरूपाक्षं शिखिवाहं षडाननम् ।
दारुणं रिपुरोगघ्नं भावये कुक्कुटध्वजम् ।।

लमित्यादि पञ्चपूजा ।

मूलमन्त्रः - ओं सौं श्रीं ह्रीं क्लीं ऐं नं ळं शरवणभवाय नमः ।

जपान्ते हृदयादिन्यास दिग्विमोक - ध्यान - लमित्यादि पूजा - जपसमर्पणानि ।

* * *

## सुब्रह्मण्य - एकचत्वारिंशदक्षरो मन्त्रः

अस्य श्री सुब्रह्मण्यमहामन्त्रस्य, ब्रह्मा ऋषिः । अनुष्टुप्छन्दः । श्री सुब्रह्मण्यो देवता । शरजन्मा अक्षयो बीजम्। शक्तिधरोऽक्षयः कार्तिकेयः शक्तिः । क्रौञ्चधरः कीलकम् । शिखिवाहनः कवचम् । सुब्रह्मण्यप्रसाद-सिद्ध्यर्थे जपे विनियोगः ॥

करन्यासः - ओं शं ओङ्कारस्वरूपाय ओजोधराय ओजस्विने नमः संहृतायेष्टचित्तात्मने भास्वरूपाय अङ्गुष्ठाभ्यां नमः । ओं रं षट्कोणमध्यनिलयाय षट्किरीटधराय श्रीमते षडाधाराय तर्जनीभ्यां नमः। ओं हं षण्मुखशरजन्मने शुभलक्षणाय शिखिवाहनाय मध्यमाभ्यां नमः । ओं णं कृशानुसंभवाय कवचिने कुक्कुटध्वजाय अनामिकाभ्यां नमः । ओं भं कन्दपकोटि-दीप्यमानाय द्विषड्बाहवे द्वादशाक्षाय कनिष्ठिकाभ्यां नमः। ओं वं खेटधराय खड्गिने शक्तिहस्ताय करतलकरपृष्ठाभ्यां नमः । एवं हृदयादिन्यासः । भूर्भुवस्सुवरों (इति दिग्बन्धः ।) ध्यानं—

वन्दे षण्मुखमिन्दुकोटिसदृशं रत्नप्रभाशोभितं
बालार्कद्युतिषट्किरीटविलसत्केयूरहारान्वितम्।
कर्णालम्बित कुण्डलप्रविलसद्गण्डस्थलाशोभितं
काञ्चीकङ्कणकिङ्किणीरवयुतं शृङ्गारसारोदयम्॥

ध्यायामीप्सितसिद्धिदं शिवसुतं श्रीद्वादशाक्षं गुहं
खेटं कुक्कुटमंकुशं च वरदं पाशं धनुश्चक्रकम्।

वज्रं शक्तिमसिं च शूलमभयं दोर्भिर्धृतं षण्मुखं
ध्यायच्चित्तमयूरवाहनगतं चित्रांबरालङ्कृतम् ।।

(मूलमन्त्रः) ओं ह्रीं श्रीं क्लीं औं सौः शरहणभव रहणभवश हणभवशर णभवशरह भवशरहण वशरहणभ

हृदयादिन्यासः । दिग्विमोकः । ध्यानम् । लमित्यादि पञ्चपूजा । जपसमर्पणम् ।

* * *

## श्री सुब्रह्मण्यमालामन्त्रः-१

ओं अस्य श्री सुब्रह्मण्यमालामहामन्त्रस्य, ब्रह्मा ऋषिः । गायत्री छन्दः । श्री सुब्रह्मण्यः कुमारो देवता । श्रीं बीजं, ह्रीं शक्तिः, क्लीं कीलकं, मम सर्वाभीष्ट सिद्ध्यर्थे जपे विनियोगः ।

करन्यासः - ओं श्रीं ह्रीं क्लीं कुमाराय अङ्गुष्ठाभ्यां नमः । ४ शरवणभवाय तर्जनीभ्यां नमः । ४ कार्तिकेयाय मध्यमाभ्यां नमः । ४ मयूरवाहनाय अनामिकाभ्यां नमः । ४ स्कन्दाय कनिष्ठिकाभ्यां नमः । ४ सुब्रह्मण्याय करतलकरपृष्ठाभ्यां नमः । एवं हृदयाद्यङ्गन्यासः । भूर्भुवस्सुवरोमिति दिग्बन्धः । ध्यानम्—

बालार्कायुतसन्निभं शिखिरथारूढं च षड्भिर्मुखैः
भास्वद्द्वादशलोचनं मणिमयैराकल्पकैरावृतम् ।
विद्यापुस्तकशक्ति कुक्कुट धनुर्बाणासिखेटान्वितं
भ्राजत्कार्मुकपङ्कजं हृदि महासेनान्यामाद्यं भजे ।।

*लमित्यादि पञ्चपूजा।*

ओं श्रीं ह्रीं क्लीं नमो भगवते रुद्रकुमाराय अष्टाङ्ग योगनायकाय महार्हमणिभिरलङ्कृताय क्रौञ्चगिरि-विदारणाय तारकसंहारकारणाय शक्तिशूलगदाखड्ग-खेटकपाशाङ्कुशमुसलप्रासाद्यनेकचित्रायुधालङ्कृत द्वादश-भुजाय हारनूपुरकेयूरकटककुण्डलादिविभूषिताय सकल-देवसेनासमूहपरिवृताय महादेवसेनासंमोहनाय सर्वरुद्र-गणसेविताय सकलमातृगण सेविताय रुद्रगाङ्गेयाय शरवणसंभवाय सर्वलोकशरण्याय। हन हन दुष्टान् त्रासय त्रासय। सर्वभूतप्रेतपिशाचब्रह्मराक्षसान् उत्सारय उत्सारय। अपस्मारकुष्ठादीन् आकर्षय आकर्षय, भञ्जय भञ्जय। वातपित्तश्लेष्मज्वरामयादीन् आशु निवारय निवारय। दुष्टं भीषय भीषय। सर्वलुण्टाकादीन् उत्सादय उत्सादय। सर्वरौद्रं तनुरुत्सारय उत्सारय मां रक्ष रक्ष। भगवन् कार्तिकेय प्रसीद प्रसीद।

ओं नमो भगवते सुब्रह्मण्याय महाबलपराक्रमाय क्रौञ्चगिरिमर्दनाय सर्वासुरप्राणापहरणाय इन्द्राणी-माङ्गल्यरक्षकाय त्रयस्त्रिंशत्कोटिदेवतावन्दिताय महाप्रलय कालाग्निरुद्रकुमाराय दुष्टनिग्रहशिष्टपरिपालकाय वीर-महाबलसर्वप्रचण्डमारुतमहाबलहनुमन्नारसिंहवराहादि समस्तश्वेतवराहसहिताय[1] इन्द्राग्नियम निरृतिवरुण-वायुकुबेरेशानाद्याकाशपातालदिग्बन्धनाय सर्वचण्ड-ग्रहादिनवकोटिगुरुनाथाय नवकोटि गुरुनाथ[2]शाकि-नीडाकिनी वन[3]दुर्गापीडाहरी कालभैरवी गण्डभैरवी फूं फूं

1. वराहश्वेतवराह सहिताय, 2. नवकोटिदानव, 3. काट्टेरीपिडारी

दुष्टभैरवीसहितभूतप्रेतपिशाचवेताल ब्रह्मराक्षसादिदुष्ट-ग्रहान् भञ्जय भञ्जय । षण्मुख वज्रधर समस्तग्रहान् नाशय नाशय । समस्तरोगान् नाशय नाशय । समस्तदुरितं नाशय नाशय । ओं रं ह्रां ह्रीं मयूरवाहनाय हुं फट् स्वाहा । ओं सौं श्रीं ह्रीं क्लीं ऐं सौं नं कं सौं शरवणभव ।

(जपान्ते अङ्गन्यास दिग्विमोकध्यान पञ्चपूजाः समर्पणं च ।)

## श्री सुब्रह्मण्यमालामन्त्रः-२

(कुमारतन्त्रतः)

ओं सुं सुब्रह्मण्याय स्वाहा । ओं कार्तिकेय पार्वतीनन्दन स्कन्द वरद वरद सर्वजनं मे वशमानय स्वाहा । ओं सौं सूं सुब्रह्मण्याय शक्तिहस्ताय ऋग्यजुः सामाथर्वणाय असुरकुलमर्दनाय योगाय योगाधिपतये शान्ताय शान्तरूपिणे शिवाय शिवनन्दनाय षष्ठीप्रियाय सर्वज्ञानहृदयाय षण्मुखाय श्रीं श्रीं ह्रीं क्षं गुह रविकङ्कालाय कालरूपिणे सुरराजाय सुब्रह्मण्याय नमः । ओं नमो भगवते महापुरुषाय मयूरवाहनाय गौरीपुत्राय ईशात्मजाय स्कन्दस्वामिने कुमाराय तारकारये षण्मुखाय द्वादशनेत्राय द्वादशभुजाय द्वादशात्मकाय शक्तिहस्ताय सुब्रह्मण्याय ओं नमः स्वाहा ।

* * *

# श्रीसुब्रह्मण्यहृदयम्

अस्य श्रीसुब्रह्मण्यहृदयस्तोत्रमहामन्त्रस्य, अगस्त्यो भगवान् ऋषिः । अनुष्टुप्छन्दः। श्री सुब्रह्मण्यो देवता । सौं बीजम् । स्वाहा शक्तिः । श्रीं कीलकम् । सुब्रह्मण्यप्रसादसिद्ध्यर्थे जपे विनियोगः ।

करन्यासः —सुब्रह्मण्याय अङ्गुष्ठाभ्यां नमः । षण्मुखाय तर्जनीभ्यां नमः । शक्तिधराय मध्यमाभ्यां नमः। षट्कोणसंस्थिताय अनामिकाभ्यां नमः । सर्वतोमुखाय कनिष्ठिकाभ्यां नमः । तारकान्तकाय करतलकरपृष्ठाभ्यां नमः । एवं हृदयादि न्यासः । भूर्भुवस्सुवरोमिति दिग्बन्धः । ध्यानम्—

षड्वक्त्रं शिखिवाहनं त्रिनयनं चित्राम्बरालङ्कृतं
वज्रं शक्तिमसिं त्रिशूलमभयं खेटं धनुश्चक्रकम् ।
पाशं कुक्कुटमङ्कुशं च वरदं दोर्भिर्दधानं सदा
ध्यायामीप्सित सिद्धिदं शिवसुतं श्रीद्वादशाक्षं गुहम् ॥

लमित्यादि पञ्चपूजा ।

सत्यलोके सदानन्दे मुनिभिः परिवेष्टितम् ।
पप्रच्छुर्मुनयः सर्वे ब्रह्माणं जगतां गुरुम् ॥ १

भगवन्सर्वलोकेश सर्वज्ञ कमलासन ।
सदानन्द ज्ञानमूर्ते सर्वभूतहिते रत ॥ २

बहुधा प्रोक्तमेतस्य गुहस्य चरितं महत् ।
हृदयं श्रोतुमिच्छामः तस्यैव क्रौञ्चभेदिनः ॥ ३

ब्रह्मोवाच—

शृण्वन्तु मुनयः सर्वे गुह्याद्गुह्यतरं महत्।
सुब्रह्मण्यस्य हृदयं सर्वभूतहितोदयम्॥ ४

सर्वार्थसिद्धिदं पुण्यं सर्वकार्यैक साधनम्।
धर्मार्थकामदं गुह्यं धनधान्यप्रवर्धनम्॥ ५

रहस्यमेतद्देवानां अदेयं यस्य कस्यचित्।
सर्वमित्रकरं गोप्यं तेजोबलसमन्वितम्॥ ६

प्रवक्ष्यामि हितार्थं वः परितुष्टेन चेतसा।
हृत्पद्मकर्णिकामध्ये ध्यायेत्सर्वमनोहरम्॥ ७

हृदयम्

सुवर्णमण्डपं दिव्यं रत्नतोरणराजितम्।
रत्नस्तम्भसहस्रैश्च शोभितं परमाद्भुतम्॥ ८

परमानन्दनिलयं भास्वत्सूर्यसमप्रभम्।
देवदानवगन्धर्वगरुडैर्यक्षकिन्नरैः॥ ९

सेवार्थमागतैः सिद्धैः साध्यैरध्युषितं सदा।
महायोगीन्द्रसंसेव्य मन्दारतरुमण्डितम्॥ १०

मणिविद्रुमवेदीभिर्महतीभिरुदञ्चितम्।
तन्मध्येऽनन्तरत्न श्रीच्छटामण्डलशोभितम्॥ ११

रत्नसिंहासनं दिव्यं रविकोटिसमप्रभम्।
सर्वाश्चर्यमयं पुण्यं सर्वतः सुपरिष्कृतम्॥ १२

तन्मध्येऽष्टदलं पद्मं उद्यदर्कप्रभोदयम्।
निगमागमरोलम्बलम्बितं चिन्मयोदयम्॥ १३

दिव्यं तेजोमयं दिव्यं देवताभिर्नमस्कृतम्
देदीप्यमानं रुचिभिर्विशालं सुमनोहरम् ।। १४

तन्मध्ये सर्वलोकेशं ध्यायेत्सर्वाङ्गसुन्दरम् ।
अनन्तादित्यसङ्काशं आश्रिताभीष्टदायकम् ।। १५

अचिन्त्यज्ञानविज्ञानतेजोबलसमन्वितम् ।
सर्वायुधधरं दिव्यं सर्वाश्चर्यमयं गुहम् ।। १६

महार्ह रत्नखचित षट्किरीटविराजितम् ।
शशाङ्कार्धकलारम्य समुद्यन्मौलिभूषणम् ।। १७

मदनोज्ज्वलकोदण्डमङ्गलभ्रूविराजितम् ।
विस्तीर्णारुणपद्म श्री विलसद्द्वादशेक्षणम् ।। १८

चारुश्रीवर्णसंपूर्णमुखशोभाविभासुरम् ।
मणिप्रभासमग्रश्रीस्फुरन्मकरकुण्डलम् ।। १९

लसद्दर्पणदर्पाढ्य गण्डस्थलविराजितम् ।
दिव्यकाञ्चनपुष्प श्री नासापुटविराजितम् ।। २०

मन्दहासप्रभाजालमधुराधर शोभितम् ।
सर्वलक्षणलक्ष्मीभृत्कम्बुकन्धर सुन्दरम् ।। २१

महानर्घमहारत्नदिव्यहारविराजितम् ।
समग्रनागकेयूरसन्नद्धभुजमण्डलम् ।। २२

रत्नकङ्कणसंभास्वत्कराग्र श्रीमहोज्ज्वलम् ।
महामणिकवाटाभवक्षःस्थलविराजितम् ।। २३

अतिगाम्भीर्यसंभाव्यनाभीनवसरोरुहम् ।
रत्न श्रीकलिताबद्धलसन्मध्यप्रदेशकम् ।। २४

स्फुरत्कनकसंवीतपीताम्बरसमावृतम्।
शृङ्गाररससंपूर्ण रत्नस्तम्भोपमोरुकम्॥ २५

स्वर्णकाहलरोचिष्णु जङ्घायुगलमण्डलम्।
रत्नमञ्जीरसन्नद्ध रमणीय पदाम्बुजम्॥ २६

भक्ताभीष्टप्रदं देवं ब्रह्मविष्ण्वादिसंस्तुतम्।
कटाक्षैः करुणादक्षैः तोषयन्तं जगत्पतिम्॥ २७

चिदानन्दज्ञानमूर्तिं सर्वलोकप्रियङ्करम्।
शङ्करस्यात्मजं देवं ध्यायेच्छरवणोद्भवम्॥ २८

अनन्तादित्यचन्द्राग्नि तेजः संपूर्णविग्रहम्।
सर्वलोकैकवरदं सर्वविद्यार्थतत्त्वकम्॥ २९

सर्वेश्वरं सर्वविभुं सर्वभूतहिते रतम्।

फलश्रुतिः

एवं ध्यात्वा तु हृदयं षण्मुखस्य महात्मनः॥ ३०

सर्वान्कामानवाप्नोति सम्यग्ज्ञानं च विन्दति।
शुचौ देशे समासीनः शुद्धात्मा चरिताह्निकः॥ ३१

प्राङ्मुखो यतचित्तश्च जपेद्धृदयमुत्तमम्।
सकृदेव मनुं जप्त्वा संप्राप्नोत्यखिलं शुभम्॥ ३२

इदं सर्वाघहरणं मृत्युदारिद्र्यनाशनम्।
सर्वसंपत्करं पुण्यं सर्वरोगनिवारणम्॥ ३३

सर्वकामकरं दिव्यं सर्वाभीष्ट प्रदायकम्।
प्रजाकरं राज्यकरं भाग्यदं बहुपुण्यदम्॥ ३४

गुह्याद्गुह्यतरं भूयो देवानामपि दुर्लभम्।
इदं तु नातपस्काय नाभक्ताय कदाचन॥ ३५

न चाशुश्रूषवे देयं न मदान्धाय कर्हिचित्।
सच्छिष्याय कुलीनाय स्कन्दभक्तिरताय च॥३६

सतामभिमतायेदं दातव्यं धर्मवर्धनम्।
य इदं परमं पुण्यं नित्यं जपति मानवः॥
तस्य श्री भगवान्स्कन्दः प्रसन्नो भवति ध्रुवम्॥ ३७

(श्री स्कान्दतः)

* * *

## श्री सुब्रह्मण्यकवचम्-१

अगस्त्य उवाच—

स्कन्दस्य कवचं दिव्यं नानारक्षाकरं परम्।
पुरा पिनाकिना प्रोक्तं ब्रह्मणेऽनन्तशक्तये॥ १

तदहं संप्रवक्ष्यामि भद्रं ते शृणु नारद।
अस्ति गुह्यं महापुण्यं सर्वप्राणिप्रियङ्करम्॥ २

जपमात्रेण पापघ्नं सर्वकामफलप्रदम्।
मन्त्रप्राणमिति ज्ञेयं सर्वविद्यादिकारकम्॥ ३

स्कन्दस्य कवचं दिव्यं पठनाद्व्याधिनाशनम्।
पिशाच चोरभूतानां स्मरणादेव शान्तिदम्॥ ४

पठितं स्कन्दकबचं श्रद्धयाऽनन्यचेतसा।
तेषां दारिद्र्यदुरितं न कदाचिद्भविष्यति॥ ५

भूयः साम्राज्यसंसिद्धिः अन्ते कैवल्यमक्षयम्।
दीर्घायुष्यं भवेत्तस्य स्कन्दे भक्तिश्च जायते ।। ६

अस्य श्री सुब्रह्मण्यकवचस्तोत्रमहामन्त्रस्य अगस्त्यो भगवानृषिः। अनुष्टुप् छन्दः। श्री सुब्रह्मण्यो देवता। सं बीजं, स्वाहा शक्तिः, सः कीलकम्। श्रीसुब्रह्मण्यप्रसादसिद्ध्यर्थे जपे विनियोगः।

करन्यासः- हिरण्यशरीराय अङ्गुष्ठाभ्यां नमः। इक्षुधनुर्धराय तर्जनीभ्यां नमः। शरवणभवाय मध्यमाभ्यां नमः। शिखिवाहनाय अनामिकाभ्यां नमः। शक्तिहस्ताय कनिष्ठिकाभ्यां नमः। सकलदुरितमोचनाय करतलकरपृष्ठाभ्यां नमः। एवं हृदयादिन्यासः। भूर्भुवस्सुवरों इति दिग्बन्धः।

ध्यानं—

कनककुण्डलमण्डितषण्मुखं वनजराजिविराजितलोचनम्।
निशितशस्त्रशरासनधारिणं शरवणोद्भवमीशमहं भजे ।।

लमित्यादि पञ्चपूजा।

शिखां रक्षेत्कुमारस्तु कार्तिकेयः शिरोऽवतु।
ललाटं पार्वतीसूनुः विशाखो भ्रूयुगं मम ।। ७

लोचने क्रौञ्चभेदी च नासिकां शिखिवाहनः।
कर्णद्वयं शक्तिधरः कर्णमूलं षडाननः ।। ८

गण्डयुग्मं महासेनः कपोलौ तारकान्तकः।
ओष्ठद्वयं च सेनानीः रसनां शिखिवाहनः ।। ९

तालू कलानिधिः पातु दन्तान् देवशिखामणिः।
गाङ्गेयश्चिबुकं पातु मुखं पातु शरोद्भवः ।। १०

हनू हरसुतः पातु कण्ठं कारुण्यवारिधिः।
स्कन्धावुमासुतः पातु बाहुलेयो भुजद्वयम्॥ ११

बाहू भवोद्भवः पातु स्तनौ पातु महोरगः।
मध्यं जगद्विभुः पातु नाभिं द्वादशलोचनः॥ १२

कटिं द्विषड्भुजः पातु गुह्यं गङ्गासुतोऽवतु।
जघनं जाह्नवीसूनुः पृष्ठभागं परन्तपः॥ १३

ऊरू रक्षेदुमापुत्रो जानुयुग्मं जगद्धरः।
जङ्घे पातु जगत्पूज्यो गुल्फौ पातु महाबलः॥ १४

पादौ पातु परंज्योतिः सर्वाङ्गं कुक्कुटध्वजः।
ऊर्ध्वं पातु महोदारः अधस्तात्पातु शाङ्करिः॥ १५

पार्श्वयोः पातु शत्रुघ्नः सर्वदा पातु शाश्वतः।
प्रातः पातु परं ब्रह्म मध्याह्ने युद्धकौशलः॥ १६

अपराह्ने गुहः पातु रात्रौ दैत्यान्तकोऽवतु।
त्रिसन्ध्यं तु त्रिकालज्ञः अन्तस्थं पात्वरिन्दमः॥ १७

बहिः स्थितं पातु खड्गी निषण्णं कृत्तिकासुतः।
व्रजन्तं प्रमथाधीशस्तिष्ठन्तं पातु पाशभृत्॥ १८

शयने मां पातु शूरो मार्गे मां पातु शूरजित्।
उग्रारण्ये वज्रधरः सदा रक्षतु मां वटुः॥ १९

## फलश्रुतिः

सुब्रह्मण्यस्य कवचं धर्मकामार्थमोक्षदम्।
मन्त्राणां परमं मन्त्रं रहस्यं सर्वदेहिनाम्॥ २०

सर्वरोगप्रशमनं सर्वव्याधिविनाशनम्।
सर्वपुण्यप्रदं दिव्यं सुभगैश्वर्यवर्धनम्॥ २१

सर्वत्र शुभदं नित्यं यः पठेद्वज्रपञ्जरम्।
सुब्रह्मण्यः सुसंप्रीतो वाञ्छितार्थान् प्रयच्छति।
देहान्ते मुक्तिमाप्नोति स्कन्दवर्मानुभावतः॥ २२

(स्कान्दतः)

* * *

# श्री सुब्रह्मण्यकवचम्–२

अस्य श्रीसुब्रह्मण्यकवचस्तोत्रमहामन्त्रस्य ब्रह्मा ऋषिः। अनुष्टुप् छन्दः। श्री सुब्रह्मण्यो देवता। ओं नम इति बीजम्। भगवत इति शक्तिः। सुब्रह्मण्याय इति कीलकम्[1]। श्री सुब्रह्मण्यप्रसादसिद्ध्यर्थे पारायणे विनियोगः। करन्यासः– ओं सां अङ्गुष्ठाभ्यां नमः। ओं सीं तर्जनीभ्यां नमः। ओं सूं मध्यमाभ्यां नमः। ओं सैं अनामिकाभ्यां नमः। ओं सौं कनिष्ठिकाभ्यां नमः। ओं सः करतलकरपृष्ठाभ्यां नमः। अङ्गन्यासः। ओं सां हृदयाय नमः। ओं सीं शिरसे स्वाहा। ओं सूं शिखायै वषट्। ओं सैं कवचाय हुं। ओं सौं नेत्रत्राय वौषट्। ओं सः अस्त्राय फट्। भूर्भुवस्सुवरोमिति दिग्बन्धः। ध्यानम्–

सिन्दूरारुणमिन्दुकान्तिवदनं[2] केयूरहारादिभिः
दिव्यैराभरणैर्विभूषिततनुं स्वर्गादिसौख्यप्रदम्।
अम्भोजाभयशक्तिकुक्कुटधरं रक्ताङ्गरागोज्ज्वलं
सुब्रह्मण्यमुपास्महे प्रणमतां भीतिप्रणाशोद्यतम्॥

---

1. सां बीजं, सीं शक्तिः, सूं कीलकम्। 2. कान्तमिन्दुवदनं

ओं लं पृथिव्यात्मने सुब्रह्मण्याय गन्धं समर्पयामि ।
ओं हं आकाशात्मने सुब्रह्मण्याय पुष्पाणि समर्पयामि ।
ओं यं वाय्वात्मने सुब्रह्मण्याय धूपमाघ्रापयामि ।
ओं रं अग्न्यात्मने सुब्रह्मण्याय दीपं दर्शयामि ।
ओं वं अमृतात्मने सुब्रह्मण्याय स्वाद्वन्नं निवेदयामि ।

सुब्रह्मण्योऽग्रतः[1] पातु सेनानीः पातु पृष्ठतः ।
गुहो मां दक्षिणे पातु वह्निजः[2] पातु वामतः ॥ १

शिरः पातु महासेनः स्कन्दो रक्षेल्ललाटकम् ।
नेत्रे मे द्वादशाक्षश्च श्रोत्रे रक्षतु विश्वभृत्[3] ॥ २

मुखं मे षण्मुखः पातु नासिकां शङ्करात्मजः ।
ओष्ठौ वल्लीपतिः पातु जिह्वां पातु षडाननः ॥ ३

देवसेनापतिर्दन्तान् चिबुकं बहुलोद्भवः[4] ।
कण्ठं तारकजित्पातु बाहू द्वादशबाहुकः ॥ ४

हस्तौ शक्तिधरः पातु वक्षः पातु शरोद्भवः ।
हृदयं व[5]ह्निभूः पातु कुक्षिं पात्वंबिकासुतः ॥ ५

नाभिं शम्भुसुतः पातु कटिं पातु हरात्मजः ।
ऊरू पातु गजारूढो जानू मे जाह्नवीसुतः[6] ॥ ६

जङ्घे विशाखो मे पातु पादौ मे शिखिवाहनः ।
सर्वाण्यंगानि भूतेशः सर्वधातूंश्च पावकिः ॥ ७

सन्ध्याकाले निशीथिन्यां दिवा प्रातर्जलेऽग्निषु ।
दुर्गमे च महारण्ये राजद्वारे महाभये ॥ ८

1. सुब्रह्मण्यः पुरः, 2. वह्निभूः, 3. विश्वभूः, 4. बहुलासुतः,
5. ब्रह्मभूः, 6. पातु विश्वपाः ।,

तुमुले रणमध्ये च सर्वदुष्टमृगादिषु ।
चोरादिसाध्वसेऽभेद्ये[1] ज्वरादिव्याधिपीडने ।। ९

दुष्टग्रहादिभीतौ च दुर्निमित्तादिभीषणे ।
अस्त्रशस्त्रनिपाते च पातु मां क्रौञ्चरन्ध्र[2]कृत् ।। १०

यः सुब्रह्मण्यकवचं इष्टसिद्धिप्रदं पठेत् ।
तस्य तापत्रयं नास्ति सत्यं सत्यं वदाम्यहम् ।। ११

धर्मार्थी लभते धर्ममर्थार्थी चार्थमाप्नुयात् ।
कामार्थी लभते कामं मोक्षार्थी मोक्षमाप्नुयात् ।। १२

यत्र यत्र जपेद्भक्त्या तत्र सन्निहितो गुहः ।
पूजाप्रतिष्ठाकाले च जपकाले पठेदिदम् ।
तेषामेव फलावाप्तिः महापातकनाशनम् ।। १३

यः पठेत् शृणुयाद्भक्त्या नित्यं देवस्य सन्निधौ ।
सर्वान्कामानिह प्राप्य सोऽन्ते स्कन्दपुरं व्रजेत् ।। १४

अङ्गन्यासः । भूर्भुवस्सुवरोमिति दिग्विमोकः ।
ध्यानम् । लमित्यादिपञ्चपूजा - समर्पणं पूर्ववत् ।।

* *

## श्री सुब्रह्मण्यकवचम्—३

नारद उवाच—

देवेश श्रोतुमिच्छामि ब्रह्मन् वागीश तत्त्वतः ।
सुब्रह्मण्यस्य कवचं कृपया वक्तुमर्हसि ।। १

1. चोराद्यसाध्यसंभेदे, 2. दारणः

ब्रह्मोवाच–

महर्षे शृणु मद्वाक्यं बहुना किं तवानघ।
मन्त्राश्च कोटिशः सन्ति शम्भुविष्ण्वादिदेवताः ॥ २

सहस्रनाम्नां कोट्यश्च ह्यंगन्यासाश्च कोटिशः।
उपमन्त्रास्त्वनेके च कोटिशः सन्ति नारद॥ ३

मालामन्त्राः कोटिशश्च ह्यश्वमेधफलप्रदाः।
कुमारकवचं दिव्यं भुक्तिमुक्तिफलप्रदम्॥ ४

सर्वसंपत्करं श्रीमद्वज्रसारसमन्वितम्।
सर्वात्मके शम्भुपुत्रे मतिरस्त्यत्र किं तव॥ ५

धन्योऽसि कृतकृत्योऽसि भक्तोऽसि त्वं महामते।
यस्येदं शरजं जन्म यदि वा स्कन्द एव च॥ ६

तेनैव लभ्यते चैतत्कवचं शङ्करोदितम्।
ऋषिश्छन्दो देवताश्च कार्याः पूर्ववदेव च॥ ७

ध्यानं तु ते प्रवक्ष्यामि येन स्वामिमयो भवेत्।
ओंकाररूपिणं देवं सर्वदेवात्मकं प्रभुम्॥ ८

देवसेनापतिं शान्तं ब्रह्मविष्णुशिवात्मकम्।
भक्तप्रियं भक्तिगम्यं भक्तानामार्तिभञ्जनम्॥ ९

भवानीप्रियपुत्रं च महाभयनिवारकम्।
शङ्करं सर्वलोकानां शङ्करात्मानमव्ययम्। १०

सर्वसंपत्प्रदं वीरं सर्वलोकैकपूजितम्।
एवं ध्यात्वा महासेनं कवचं वज्रपञ्जरम्॥ ११

पठेन्नित्यं प्रयत्नेन त्रिकालं शुद्धिसंयुतः ।
सत्यज्ञानप्रदं दिव्यं सर्वमङ्गलदायकम् ।। १२

अस्य श्रीसुब्रह्मण्यकवचस्तोत्रमहामन्त्रस्य परब्रह्म ऋषिः । देवी गायत्री छन्दः । प्रसन्नज्ञानसुब्रह्मण्यो देवता । ओं बीजं, श्रीं शक्तिः, सौं कीलकम् । प्रसन्नज्ञानसुब्रह्मण्य प्रसादसिद्ध्यर्थे जपे विनियोगः ।

करन्यासः– श्री सुब्रह्मण्याय अङ्गुष्ठाभ्यां नमः । शक्तिधराय तर्जनीभ्यां नमः । षण्मुखाय मध्यमाभ्यां नमः । षट्त्रिंशत्कोणसंस्थिताय अनामिकाभ्यां नमः । सर्वतोमुखाय कनिष्ठिकाभ्यां नमः । तारकान्तकाय करतलकरपृष्ठाभ्यां नमः । एवं हृदयादिन्यासः । भूर्भुवस्सुवरोम् (इति दिग्बन्धः) । ध्यानम्–

षड्वक्त्रं शिखिवाहनं त्रियनं चित्राम्बरालङ्कृतं
शक्तिं वज्रमयीं त्रिशूलमभयं खेटं धनुश्चक्रकम् ।
पाशं कुक्कुटमङ्कुशं च वरदं दोर्भिर्दधानं सदा
ध्यायामीप्सितसिद्धये शिवसुतं स्कन्दं सुराराधितम् ।।

द्विषड्भुजं षण्मुख मम्बिकासुतं
कुमारमादित्यसमानतेजसम् ।
वन्दे मयूरासनमग्निसंभवं
सेनान्यमद्याहमभीष्टसिद्धये ।।

गाङ्गेयं वह्निगर्भं शरवणजनितं ज्ञानशक्तिं कुमारं
ब्रह्मेशानामरेड्यं गुहमचलसुतं रुद्रतेजःस्वरूपम् ।
सेनान्यं तारकघ्नं सकलभयहरं कार्तिकेयं षडास्यं
सुब्रह्मण्यं मयूर ध्वजरथसहितं देव देवं नमामि ।।

कनककुण्डलमण्डितषण्मुखं वनजराजिविराजित लोचनम् ।
निशितशस्त्रशरासनधारिणं शरवणोद्भवमीशसुतं भजे ।।
लमित्यादि पञ्चपूजा ।

## कवचम्

सुब्रह्मण्यः शिरः पातु शिखां पातु शिवात्मजः ।
शिवः पातु ललाटं मे भ्रूमध्यं क्रौञ्चदारणः ।। १३

भ्रुवौ पातु कुमारो मे नेत्रे पातु त्रिनेत्रकः ।
पायाद्गौरीसुतः श्रोत्रे गण्डयुग्मं हरात्मजः।।१४

दक्षनासापुटद्वारं प्राणरूपी महेश्वरः ।
सर्वदेवात्मकः पातु जिह्वां सारस्वतप्रदः ।। १५

दन्तान् रक्षतु देवेशः तालुयुग्मं शिवात्मजः ।
देवसेनापतिः पातु चुबुकं चाद्रिजासुतः ।। १६

पार्वतीनन्दनः पातु द्वावोष्ठौ मम सर्वदा ।
षण्मुखो मे मुखं पातु सर्वदेवशिखामणिः ।। १७

सिंहगर्वापहन्ता मे ग्रीवां पातु सनातनः ।
तारकासुरसंहन्ता कण्ठं दुष्टान्तकोऽवतु ।। १८

सुभुजो मे भुजौ पातु स्कन्धमग्निसुतो मम ।
सन्धियुग्मं गुहः पातु करौ मे पातु पावनः ।। १९

कराङ्गुलीः श्रीकरोऽव्यात् सुररक्षणदीक्षितः ।
वक्षःस्थलं महासेनः तारकासुरसूदनः ।। २०

कुक्षिं पातु सदा देवः सुब्रह्मण्यः सुरेश्वरः ।
उदरं पातु रक्षोहा नाभिं मे विश्वपालकः ।। २१

लोकेशः पातु पृष्ठं मे कटिं पातु धराधरः ।
गुह्यं जितेन्द्रियः पातु शिश्नं पातु प्रजापतिः ॥ २२

अण्डद्वयं महादेव ऊरुयुग्मं सदा मम ।
सर्वभूतेश्वरः पातु जानुयुग्ममघापहः ॥ २३

जङ्घे मे विश्वभुक्पातु गुल्फौ पातु सनातनः ।
वल्लीश्वरः पातु मम मणिबन्धौ महाबलः ॥ २४

पातु वल्लीपतिः पादौ पादपृष्ठं महाप्रभुः ।
पादाङ्गुलीः श्रीकरो मे इन्द्रियाणि सुरेश्वरः ॥ २५

त्वचं महीपतिः पातु रोमकूपांस्तु शाङ्करिः ।
षाण्मातुरः सदा पातु सर्वदा च हरप्रियः ॥ २६

कार्तिकेयस्तु शुक्लं मे रक्तं शरवणोद्भवः ।
वाचं वागीश्वरः पातु नादं मेऽव्यात्कुमारकः ॥ २७

पूर्वस्यां दिशि सेनानीर्मां पातु जगदीश्वरः ।
आग्नेय्यामग्निदेवश्च क्रतुरूपी परात्परः ॥ २८

दक्षिणस्यामुग्ररूपः सर्वपापविनाशनः ।
खड्गधारी च नैरृत्यां सर्वरक्षोनियामकः ॥ २९

पश्चिमस्यां दिशि सदा जलाधारो जितेन्द्रियः ।
वायव्यां प्राणरूपोऽव्यान्महासेनो महाबलः ॥ ३०

उत्तरस्यां दिशि सदा निधिकर्ता स पातु माम् ।
शम्भुपुत्रः सदा पातु दिश्यैशान्यां महाद्युतिः ॥ ३१

ऊर्ध्वं ब्रह्मपतिः पातु चतुर्मुखनिषेवितः ।
अधस्तात्पातु विश्वात्मा सदा ब्रह्माण्डभृत्परः ॥ ३२

मध्यं पातु महासेनः शूरसंहारकृत्सदा।
अहङ्कारं मनो बुद्धिं स्कन्दः पातु सदा मम॥ ३३

गङ्गातीरनिवासी मामादियामे सदाऽवतु।
मध्ययामे सुरश्रेष्ठस्तृतीये पातु शाम्भवः॥ ३४

दिनान्ते लोकनाथो मां पूर्वरात्र्यां पुरारिजः।
अर्धरात्रे महायोगी निशान्ते कालरूपधृत्॥ ३५

मृत्युञ्जयः सर्वकालमन्तस्तु शिखिवाहनः।
बहिः स्थितं शक्तिधरः पातु मां योगिपूजितः॥ ३६

सर्वत्र मां सदा पातु योगविद्यो निरञ्जनः।
पातु मां पञ्चभूतेभ्यः पञ्चभूतात्मकस्तदा॥ ३७

तिष्ठन्तमग्निभूः पातु गच्छन्तं शूरसूदनः।
विशाखोऽव्याच्छयानं मां निषण्णं तु सुरेश्वरः॥ ३८

मार्गे मे नीलकण्ठश्च शैलदुर्गेषु नायकः।
अरण्यदेशे दुर्गे चाभयं दद्याद्भयापहः॥ ३९

भार्यां पुत्रप्रदः पातु पुत्रान् रक्षेत् हरात्मजः।
पशून् रक्षेन्महातेजा धनं धनपतिर्मम॥ ४०

राजराजार्चितः पातु ह्रस्वदेहं महाबलः।
जीवनं पातु सर्वेशो महामणिविभूषणः॥ ४१

सूर्योदये तु मां सर्वो ह्यश्विन्याद्याश्च तारकाः।
मेषाद्या राशयश्चैव प्रभवाद्याश्च वत्सराः॥ ४२

अयने द्वे षडृतवो मासाश्चैत्रमुखास्तथा।
शुक्लकृष्णौ तथा पक्षौ तिथयः प्रतिपन्मुखाः॥ ४३

अहोरात्रे च यामादि मुहूर्ता घटिकास्तथा।
कलाः काष्ठादयश्चैव ये चान्ये कालभेदकाः ।। ४४

ते सर्वे गुणसंपन्नाः सन्तु सौम्यास्तदाज्ञया।
ये पक्षिणो महाक्रूराः उरगाः क्रूरदृष्टयः ।। ४५

उलूकाः काकसंघाश्च श्येनाः कङ्कादिसंज्ञकाः ।
शुकाश्च सारिकाश्चैव गृध्राः कङ्का भयानकाः ।। ४६

ते सर्वे स्कन्ददेवस्य खड्गजालेन खण्डिताः ।
शतशो विलयं यान्तु भिन्नपक्षा भयातुराः ।। ४७

ये द्रव्यहारिणश्चैव ये च हिंसापरा द्विषः ।
ये प्रत्यूहकरा मर्त्या दुष्टमर्त्या दुराशयाः ।। ४८

दुष्टभूपालसन्दोहाः ये भूभारकराः सदा।
कार्यविघ्नकरा ये च ये खला दुष्टबुद्धयः ।। ४९

ये च मायाविनः क्रूराः सर्वद्रव्यापहारिणः ।
ये चापि दुष्टकर्माणो म्लेच्छाश्च यवनादयः ।। ५०

नित्यं क्षुद्रकरा ये च ह्यस्मद्बाधाकराः परे।
दानवा ये महादैत्याः पिशाचा ये महाबलाः ।। ५१

शाकिनीडाकिनीभेदाः वेताला ब्रह्मराक्षसाः ।
कूष्माण्डभैरवाद्या ये कामिनी मोहिनी तथा ।। ५२

अपस्मारग्रहा ये च रक्तमांसभुजो हि ये।
गन्धर्वाप्सरसः सिद्धा ये च देवस्य योनयः ।। ५३

ये च प्रेताः क्षेत्रपालाः ये विनायकसंज्ञकाः ।
महामेषा महाव्याघ्रा महातुरगसंज्ञकाः ।। ५४

महागोवृषसिंहाद्याः सैन्धवा ये महागजाः ।
वानराः शुनका ये च वराहा वनचारिणः ।। ५५

वृकोष्ट्रखरमार्जाराः ये चातिक्षुद्रजन्तवः ।
अगाधभूता भूताश्च ग्रहग्राह्यप्रदायकाः ।। ५६

ज्वालामालाश्च तटितो दुरात्मानोऽति दुःखदाः ।
नानारोगकरा ये च क्षुद्रविद्या महाबलाः ।। ५७

मन्त्रयन्त्रसमुद्भूताः तन्त्रकल्पितविग्रहाः ।
ये स्फोटका महारोगाः वातिकाः पैत्तिकाश्च ये ।। ५८

सन्निपात श्लेष्मकाश्च महादुःखकरास्तथा ।
माहेश्वरा वैष्णवाश्च वैरिञ्चाश्च महाज्वराः ।। ५९

चातुर्थिकाः पाक्षिकाश्च मासषाण्मासिकाश्च ये ।
सांवत्सरा दुर्निवार्या ज्वराः परमदारुणाः ।। ६०

सृष्टका ये महोत्पाता ये जाग्रत्स्वप्नदूषकाः ।
ये ग्रहाः क्रूरकर्तारो ये वा बालग्रहादयः ।। ६१

महाशिनो मांसभुजो मनोबुद्धीन्द्रियापहाः ।
स्फोटकाश्च महाघोराः चर्ममांसादिसंभवाः ।। ६२

दिवा चोरा रात्रिचोरा ये सन्ध्यासु च दारुणाः ।
जलजाः स्थलजाश्चैव स्थावरा जङ्गमाश्च ये ।। ६३

विषप्रदाः कृत्रिमाश्च मन्त्रतन्त्रक्रियाकराः ।
मारणोच्चाटनोन्मूल द्वेषमोहनकारिणः ।। ६४

गरुडाद्याः पक्षिजाता उद्भिदश्चाण्डजाश्च ये ।
कूटयुद्धकरा ये च स्वामिद्रोहकराश्च ये ।। ६५

क्षेत्रग्रामहरा ये च बन्धनोपद्रवप्रदाः ।
मन्त्रा ये विविधाकाराः ये च पीडाकरास्तथा ।। ६६

ये चोक्ता ये ह्यनुक्ताश्च भूपातालान्तरिक्षगाः ।
ते सर्वे शिवपुत्रस्य कवचोत्तारणादिह ।। ६७
सहस्रधा लयं यान्तु दूरादेव तिरोहिताः ।।

फलश्रुतिः

इत्येतत्कवचं दिव्यं षण्मुखस्य महात्मनः ।। ६८

सर्वसंपत्प्रदं नृणां सर्वकार्यार्थसाधनम् ।
सर्ववश्यकरं पुण्यं पुत्रपौत्रप्रदायकम् ।। ६९

रहस्यातिरहस्यं च गुह्याद्गुह्यतरं महत् ।
सर्वदेवप्रियकरं सर्वानन्दप्रदायकम् ।। ७०

अष्टैश्वर्यप्रदं नित्यं सर्वरोगनिवारणम् ।
अनेन सदृशं वर्म नास्ति ब्रह्माण्डगोलके ।। ७१

सत्यं सत्यं पुनः सत्यं शृणु पुत्र महामुने ।
एकवारं जपन्नित्यं मुनितुल्यो भविष्यति ।। ७२

त्रिवारं यः पठेन्नित्यं गुरुध्यानपरायणः ।
स एव षण्मुखः सत्यं सर्वदेवात्मको भवेत् ।। ७३

पठतां यो भेदकृत्स्यात् पापकृत्स भवेद्ध्रुवम् ।
कोटिसंख्यानि वर्माणि नानेन सदृशानि हि ।। ७४

कल्पवृक्षसमं चेदं चिन्तामणिसमं मुने ।
सकृत्पठनमात्रेण महापापैः प्रमुच्यते ।। ७५

सप्तवारं पठेद्यस्तु रात्रौ पश्चिमदिङ्मुखः ।
मण्डलान्निगडग्रस्तो मुच्यते न विचारणा ॥ ७६

विद्वेषी च भवेद्वश्यः पठनादस्य वै मुने ।
कृत्रिमाणि च सर्वाणि नश्यन्ति पठनाद् ध्रुवम् ॥ ७७

यं यं च याचते कामं तं तमाप्नोति पूरुषः ।
नित्यं त्रिवारं पठनात्खण्डयेच्छत्रुमण्डलम् ॥ ७८

दशवारं जपन्नित्यं त्रिकालज्ञो भवेन्नरः ।
इन्द्रस्येन्द्रत्वमेतेन ब्रह्मणो ब्रह्मताऽभवत् ॥ ७९

चक्रवर्तित्वमेतेन सर्वेषां चैव भूभृताम् ।
वज्रसारतमं चैतत्कवचं शिवभाषितम् ॥ ८०

पठतां शृण्वतां चैव सर्वपापहरं परम् ।
गुरुपूजापरो नित्यं कवचं यः पठेदिदम् ॥ ८१

मातुः स्तन्यं पुनः सोऽपि न पिबेन्मुनिसत्तम ।
कुमारकवचं चेदं यः पठेत् स्वामिसन्निधौ ॥ ८२

सकृत्पठनमात्रेण स्कन्दसायुज्यमाप्नुयात् ।
सेनानीरग्निभूः स्कन्दस्तारकारिर्गुणप्रियः ॥ ८३

षाण्मातुरो बाहुलेयः कृत्तिकाप्रियपुत्रकः ।
मयूरवाहनः श्रीमान् कुमारः क्रौञ्चदारणः ॥ ८४

विशाखः पार्वतीपुत्रः सुब्रह्मण्यो गुहस्तथा ।
षोडशैतानि नामानि शृणुयात् श्रावयेत्सदा ॥ ८५

तस्य भक्तिश्च मुक्तिश्च करस्थैव संशयः ।
गोमूत्रेण तु पक्त्वान्नं भुक्त्वा षण्मासतो मुने ॥ ८६

सहस्रं मूलमन्त्रं च जप्त्वा नियमतन्त्रितः ।
सप्तविंशतिवारं तु नित्यं यः प्रपठेदिदम् ।। ८७

वायुवेगमनोवेगौ लभते नात्र संशयः ।
य एवं वर्षपर्यन्तं पूजयेद्भक्तिसंयुतः ।। ८८

ब्रह्मलोकं च वैकुण्ठं कैलासं समवाप्स्यति ।
तस्मादनेन सदृशं कवचं भुवि दुर्लभम् ।। ८९

यस्य कस्य न वक्तव्यं सर्वथा मुनिसत्तम ।
पठन्नित्यं च पूतात्मा सर्वसिद्धिमवाप्स्यति ।
सुब्रह्मण्यस्य सायुज्यं सत्यं च लभते ध्रुवम् ।। ९०

(श्री स्कन्दपुराणतः)

* * *

# सुब्रह्मण्यलघुपूजाविधिः

शुक्लाम्बरधरं + शान्तये ।। प्राणायामः । विघ्नेश्वरपूजा । शुभे + तिथौ वल्ली देवसेना- समेत - श्री सुब्रह्मण्य - प्रीत्यर्थं अस्माकं सहकुटुम्बानां क्षेमस्थैर्यवीर्यविजया - युरारोग्यैश्वर्याणां अमभिवृद्ध्यर्थं सत्सन्तान - सौभाग्यसिद्ध्यर्थं सर्वारिष्ट-निवृत्त्यर्थं सर्वाभीष्टसिद्ध्यर्थं यावच्छक्ति भगवतः श्रीसुब्रह्मण्यस्य ध्यानावाहनादि षोडशोपचारपूजां करिष्ये ।। इति संकल्प्य

विघ्नेश्वर मुद्वास्य ।। पूर्वाङ्गपूजा ।
सेनाधिप महाबाहो षण्मुखेश्वरनन्दन ।
मयूरवाहन स्वामिन् शक्तिद्वय समन्वित ।।

करुणाकर भक्तेष्टवरदाद्रिसुतासुत ।
द्विषड्भुज कुमार त्वं प्रसन्नो भव सर्वदा ।।

सिंहासने सुखासीनं सूर्यकोटिसमप्रभम् ।
ध्यायामि देवं तं भक्त्या स्कन्दं शरवणोद्भवम् ।।
वल्लीदेवसेना - समेतश्रीसुब्रह्मण्यं ध्यायामि ।।

सुब्रह्मण्य महाभाग क्रौञ्चाख्यगिरिभेदन ।
आवाहयामि देव त्वां भक्ताभीष्टप्रदो भव ।।
सुब्रह्मण्यं आवाहयामि ।।

अग्निपुत्र महाभाग कार्त्तिकेय सुरार्चित ।
रत्नसिंहासनं देव गृहाण वरदाव्यय ।।
सुब्रह्मण्याय नमः । आसनं समर्पयामि ।।

गणेशानुज देवेश वल्लीकामदविग्रह ।
पाद्यं गृहाण गाङ्गेय भक्त्या दत्तं सुरार्चित ।।

सुब्रह्मण्याय नमः । पाद्यं समर्पयामि ।

ब्रह्मादि देवबृन्दानां प्रणवार्थोपदेशक ।
अर्घ्यं गृहाण देवेश तारकान्तक षण्मुख ।।
सुब्रह्मण्याय नमः । अर्घ्यं समर्पयामि ।।

एलाकुङ्कुमकस्तूरीकर्पूरादिसुवासितैः ।
तीर्थैराचम्यतां देव गङ्गाधरसुताव्यय ।।
सुब्रह्मण्याय नमः । आचमनीयं समर्पयामि ।

स्वामिन् शरवणोद्भूत शूरपद्मासुरान्तक ।
गङ्गादिसलिलैः स्नाहि देवसेनामनोहर ।।
सुब्रह्मण्याय नमः । स्नपयामि ।।

शर्करा मधु गोक्षीर फलसार घृतैर्युतम् ।
पञ्चामृतस्नानमिदं बाहुलेय गृहाण भो ॥
सुब्रह्मण्याय नमः । पञ्चामृत स्नानं समर्पयामि ॥
पुनः शुद्धोदक-स्नानं समर्पयामि ॥

दुकूल-वस्त्रयुगलं मुक्ताजाल-समन्वितम् ।
प्रीत्या गृहाण गाङ्गेय भक्तापङ्कजनक्षम ॥
सुब्रह्मण्याय नमः । वस्त्रयुग्मं समर्पयामि ॥

राजतं ब्रह्मसूत्रं च कांचनं चोत्तरीयकम् ।
यज्ञोपवीतं देवेश गृहाण सुरनायक ॥
सुब्रह्मण्याय नमः । उपवीतं समर्पयामि ॥

नित्याग्निहोत्रसंभूतं विरजाहोमभावितम् ।
गृहाण भस्म हे स्वामिन् भक्तानां भूतिदो भव ॥
सुब्रह्मण्याय नमः । भस्मरक्षां समर्पयामि ॥

कस्तूरी-कुङ्कुमाद्यैश्च वासितं सहिमोदकम् ।
गन्धं विलेपनार्थाय गृहाण क्रौञ्चदारण ॥
सुब्रह्मण्याय नमः । गन्धान् धारयामि ॥

अक्षतान् धवलान् दिव्यान् शालेयान् तण्डुलान् शुभान् ।
काञ्चनाक्षत - संयुक्तान् कुमार प्रतिगृह्यताम् ॥
सुब्रह्मण्याय नमः । अक्षतान् समर्पयामि ॥

पुन्नाग-वकुलाशोक-नीप-पाटल-जाति च ।
वासन्तिका बिल्वजाजी-पुष्पाणि परिगृह्यताम् ॥
सुब्रह्मण्याय नमः । पुष्पाणि समर्पयामि ॥

*अङ्गपूजा ॥*

सुरवन्दित पादाय नमः । पादौ पूजयामि । मुकुराकार जानवे नमः जानुनी पूजयामि । करिराजकरोरवे नमः ऊरू पूजयामि । रत्नकिंकिणिकायुक्तकटये नमः कटिं पूजयामि । गुहाय नमः गुह्यं पूजयामि । हेरम्बसहोदराय नमः उदरं पूजयामि । सुनाभये नमः नाभिं पूजयामि । सुहृदे नमः हृदयं पूजयामि । विशालवक्षसे नमः वक्षःस्थलं पूजयामि । कृत्तिकास्तनन्धयाय नमः स्तनौ पूजयामि । शत्रुजयोर्जितबाहवे नमः । बाहून् पूजयामि । शक्तिहस्ताय नमः । हस्तान् पूजयामि । पुष्करस्रजे नमः । कण्ठं पूजयामि । षण्मुखाय नमः मुखानि पूजयामि । सुनासाय नमः नासिके पूजयामि । द्विषण्णेत्राय नमः नेत्राणि पूजयामि । हिरण्यकुण्डलाय नमः कर्णौ पूजयामि । फालनेत्रसुताय नमः फालं पूजयामि । वेदशिरोवेद्याय नमः शिरः पूजयामि । सेनापतये नमः सर्वाण्यङ्गानि पूजयामि ॥

सुब्रह्मण्याष्टोत्तरशतनामभिः अर्चना ॥

दशाङ्ग गुग्गुलूपेतं सुगन्धि सुमनोहरम् ।
कपिलाघृतसंयुक्तं धूपं गृह्णीष्व षण्मुख ॥
सुब्रह्मण्याय नमः धूप माघ्रापयामि ।

साज्यं त्रिवर्तिसंयुक्तं वह्निना योजितं मया ।
दीपं गृहाण स्कन्देश त्रैलोक्यतिमिरापहम् ॥
सुब्रह्मण्याय नमः दीपं दर्शयामि ।

लेह्यं चोष्यं च भोज्यं च पानीयं षड्रसान्वितम्।
भक्ष्यशाकादिसंयुक्तं नैवेद्यं स्कन्द गृह्यताम्॥
सुब्रह्मण्याय नमः महानैवेद्यं निवेदयामि॥

पूगीफलसमायुक्तं नागवल्लीदलैर्युतम्।
कर्पूरचूर्णसंयुक्तं  तांबूलं प्रतिगृह्यताम्॥
सुब्रह्मण्याय नमः तांबूलं समर्पयामि

देवसेनापते स्कन्द संसारध्वान्तभास्कर।
नीराजनमिदं देव गृह्यतां सुर सत्तम॥
सुब्रह्मण्याय नमः, कर्पूरनीराजनं दर्शयामि।

पुष्पाञ्जलिं प्रदास्यामि भक्ताभीष्टप्रदायक।
गृहाणवल्लीरमण सुप्रीतेनान्त रात्मना॥
सुब्रह्मण्याय नमः पुष्पांजलिं समर्पयामि॥

देवसेनापते स्वामिन् सेनानीरखिलेष्टद।
इदमर्घ्यं प्रदास्यामि सुप्रीतो भव सर्वदा॥
श्रीसुब्रह्मण्याय नमः - इदमर्घ्यम् इदमर्घ्यं इदमर्घ्यम्।

चन्द्रात्रेय महाभाग सोम सोमविभूषण।
इदमर्घ्यं प्रदास्यामि सुप्रीतो भव सर्वदा॥
रोहिणीसहित चन्द्राय नमः॥ इदमर्घ्यम् इदमर्घ्यं इदमर्घ्यम्।

नीलकण्ठ महाभाग सुब्रह्मण्यसुवाहन।
इदमर्घ्यं प्रदास्यामि सुप्रीतो भव सर्वदा॥
मयूराय नमः॥ इदमर्घ्यं इदमर्घ्यम्॥

सुब्रह्मण्य स्वरूपस्य ब्राह्मणस्य इदमासनम्।
गन्धादिसकलाराधनैः स्वर्चितम्॥

सेनानीः प्रतिगृह्णाति सेनानीर्वै ददाति च।
सेनानीस्तारको द्वाभ्यां सेनान्यै ते नमो नमः ॥

इदमुपायनं सदक्षिणाकं सतांबूलं वल्लीदेवसेनासमेत श्रीसुब्रह्मण्य प्रीतिं कामयमानस्तुभ्यमहं संप्रददे ॥ इत्युपायनदानम् ॥

श्रीसुब्रह्मण्यः सुप्रीतः सुप्रसन्नो वरदो भवतु ॥

## श्रीसुब्रह्मण्यपूजाविधिः ।

आब्रह्मलोकाद् आशेषाद् आलोकालोकपर्वतात् ।
ये वसन्ति द्विजा देवाः तेभ्यो नित्यं नमो नमः ॥

ॐ नमो ब्रह्मादिभ्यो ब्रह्मविद्यासंप्रदायकर्तृभ्यो वंशर्षिभ्यो नमो गुरुभ्यः । सर्वोपप्लवरहित-प्रज्ञानघन-प्रत्यगर्थो ब्रह्मैवाहमस्मि । सोऽहमस्मि-ब्रह्माहमस्मि ।

श्रीनाथादिगुरुत्रयं गणपतिं पीठत्रयं भैरवं
सिद्धौघं वटुकत्रयं पदयुगं दूतीक्रमं मण्डलम् ।
वीरान् द्व्यष्टचतुष्कषष्टिनवकं वीरावलीपञ्चकं
श्रीमन्मालिनि मन्त्रराजसहितं वन्दे गुरोर्मण्डलम् ॥

गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः ।
गुरुस्साक्षात्परं ब्रह्म तस्मै श्रीगुरवे नमः ॥

वन्दे गुरुपदद्वन्द्वं अवाङ्मनसगोचरम् ।
रक्तशुक्लप्रभामिश्रं अतर्क्यं त्रैपुरं महः ॥

नारायणं पद्मभुवं वसिष्ठं शक्तिं च तत्पुत्रपराशरं च।
व्यासं शुकं गौडपदं महान्तं गोविन्दयोगीन्द्रम् अथास्य शिष्यम्।
श्रीशङ्कराचार्यमथास्य पद्मपादं च हस्तामलकं च शिष्यम्
तं तोटकं वार्त्तिककारमन्यान् अस्मद्गुरून् सन्ततमानतोऽस्मि॥

द्वारपूजा। (ॐ-ह्रीम्-श्रीम्-३) ३. गं-गणपतये नमः। (दक्षभागे) ३. सं सरस्वत्यै नमः। (वामभागे) ३. पं पतङ्गाय नमः। (ऊर्ध्वे) ३. गं गजलक्ष्म्यै नमः। (मध्ये)

द्वारपालकपूजा। ३. सुं सुदेहाय नमः। (दक्षिणे) ३. दीं दीप्तायै नमः। (दक्षिणे) ३. सुं सुमुखाय नमः। (उत्तरे) ३. सूं सूक्ष्माय नमः। (उत्तरे)

तत्त्वाचमनम्। ३- ॐ - आत्मतत्त्वं शोधयामि स्वाहा। ३- सां - विद्यातत्त्वं शोधयामि स्वाहा। ३- शरवणभव - शिवतत्त्वं शोधयामि स्वाहा। ३- ॐ सां शरवणभव - सर्वतत्त्वं शोधयामि स्वाहा॥ (गुरुपादुकामुद्रां कुर्यात्)

घण्टापूजा- आगमार्थं तु देवानां गमनार्थं च रक्षसाम्।
कुर्वे घण्टारवं तत्र देवताह्वानलाञ्छनम्॥

सङ्कल्पः- शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम्।
प्रसन्नवदनं वन्दे सर्वविघ्नोपशान्तये॥

मूलेन प्राणानायम्य। देशकालौ सङ्कीर्त्य- श्रीवल्लीदेवसेनासमेत श्रीसुब्रह्मण्यस्वामिप्रसादसिद्ध्यर्थं, यथासं- भवद्रव्यैः यथाशक्ति सपर्याक्रमं निर्वर्तयिष्ये। तेन परमेश्वरं प्रीणयानि। 'ॐ ह्रीं आधारशक्तिकमलासनाय नमः।''- इति पुष्पाक्षतैः आसनम् अभ्यर्च्य, आसने उपविशेत्॥

३. ॐ सां सुब्रह्मण्याय, शक्तिहस्ताय, शरवणोद्भवाय, असुरकुलमर्दनाय, मयूरवाहनाय, गौरीपुत्राय, षण्मुखाय नमः ॥ (इति बद्धाञ्जलिः प्रार्थयेत्।)

श्री गुरो दक्षिणामूर्त्ते भक्तानुग्रहकारक।
अनुज्ञां देहि भगवन् ब्रह्मण्ययजनाय मे ॥

लघुप्राणप्रतिष्ठा- ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हं -ॐ हंसः सोऽहम्। सोऽहं हंसः शिवः। श्रीसुब्रह्मण्यप्राणाः- इह प्राणाः। ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हं श्रीसुब्रह्मण्यजीवः इह स्थितः। सर्वेन्द्रियाणि वाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राणाः इहैव आगत्य, अस्मिन् चक्रे (बिम्बे) सुखं चिरं तिष्ठन्तु स्वाहा ॥ ॐ असुनीते पुनरस्मासु चक्षुः पुनःप्राणमिह नो धेहि भोगम्। ज्योक् पश्येम सूर्यमुच्चरन्तमनुमते मृळयानः स्वस्ति ॥

पीठशक्तिपूजा

ॐ ह्रीं श्रीं - मण्डूकाय नमः। ३. कालाग्निरुद्राय नमः। ३. मूलप्रकृत्यै नमः। ३. आधारशक्त्यै नमः। ३. कूर्माय नमः। ३. अनन्ताय नमः। ३. वराहाय नमः। ३. पृथिव्यै नमः। ३. अमृतार्णवाय नमः। ३. नवरत्नमयद्वीपाय नमः। ३. स्वर्णपर्वताय नमः। ३. नन्दनोद्यानाय नमः। ३. कल्पकोद्यानाय नमः। ३. माणिक्यमण्डलाय नमः। ३. रत्नवेदिकायै नमः। ३. श्वेतच्छत्राय नमः। ३. रत्नसिंहासनाय नमः। ३. धर्माय नमः। ३. ज्ञानाय नमः। ३. वैराग्याय नमः। ३. ऐश्वर्याय नमः। ३. अधर्माय नमः। ३. अज्ञानाय नमः। ३. अवैराग्याय नमः। ३. अनैश्वर्याय नमः। ३. मायायै नमः। ३. विद्यायै नमः। ३. आनन्दकन्दाय नमः। ३. संविन्नाळाय नमः। ३.

प्रकृतिमयपत्रेभ्यो नमः । ३. विकृतिमयकेसरेभ्यो नमः । ३. पञ्चाशद्वर्ण बीजाढ्यकर्णिकायै नमः । ३. सूर्यमण्डलाय नमः । ३. सोममण्डलाय नमः । ३. वह्निमण्डलाय नमः । ३. सं सत्त्वाय नमः । ३. रं रजसे नमः । ३. तं तमसे नमः । ३. आं आत्मने नमः । ३. अं अन्तरात्मने नमः । ३. पं परमात्मने नमः । ३. ह्रीं ज्ञानात्मने नमः । ३. मायातत्त्वात्मने नमः । ३. कलातत्त्वात्मने नमः । ३. विद्यातत्त्वात्मने नमः । ३. परतत्त्वात्मने नमः । इति पीठमभ्यर्च्य शकुन्याद्यष्टशक्तीः प्राच्याद्यष्टदिक्षु अभ्यर्चयेत् । तद्यथा- शकुन्यै नमः (प्राच्याम्) ३. रेवत्यै नमः (आग्नेय्याम्) ३. भूतायै नमः (दक्षिणस्याम्) ३. महाभूतायै नमः (नैर्ऋत्याम्) ३. निशीथिन्यै नमः (प्रतीच्याम्) ३. मालिन्यै नमः (वायव्याम्) ३. शीतलायै नमः (उदीच्याम्) ३. शुद्धायै नमः (ऐशान्याम्) ३. विश्वमुखायै नमः- (मध्यभागे)- (इति पीठशक्तीः संपूज्य, दीपं प्रज्वालयेत् ।)

दीपदेवि महादेवि शुभं भवतु मे सदा ।
यावत् पूजासमाप्तिः स्यात् तावत् प्रज्वल सुस्थिरा ।।

-(इति दीपे पुष्पाञ्जलिं दत्त्वा) ३. मूलमन्त्रेण चक्रमध्ये पुष्पाञ्जलिं दद्यात् ।।

भूतशुद्धिः- श्वाससमीरं पिङ्गलया अन्तराकृष्य- "३. मूलाधारात् सुषुम्णापथेन जीवशिवं परमशिवपदे योजयामि स्वाहा ।।" इति मन्त्रेण मूलाधारस्थितं जीवात्मानं, सुषुम्णावर्त्मना ब्रह्मरन्ध्रं नीत्वा, परमशिवेन एकीभूतं विभाव्य, इडया वायुं रेचयेत् ।। ३. यं (इडया पूरयित्वा) संकोचशरीरं शोषय शोषय स्वाहा ।। (इति निजशरीरं शोषितं विभाव्य, पिङ्गलया रेचयेत्) । ३. रं- (पिङ्गलया पूरयित्वा) संकोचशरीरं दह दह-पच

पच स्वाहा ।। (इति प्लुष्टं भस्मीकृतं च विभाव्य, इडया रेचयेत्) ।। ३. लं (इडया पूरयित्वा) परमशिवामृतं वर्षय वर्षय स्वाहा ।। (इति तद्भस्म, सहस्रारेन्दुमण्डलविगलदमृतरसेन सिक्तं च विभाव्य, पिङ्गलया रेचयेत्) । ३. वं (पिङ्गलया पूरयित्वा) शाम्भवशरीरं उत्पादयोत्पादय स्वाहा ।। (इति तद्भस्मनो दिव्यशरीरम् उत्पन्नं विभाव्य, इडया रेचयेत्) ।। ३. हंसः सोऽहम् (इडया पूरयित्वा) उवतर अवतर शिवपदाज्जीव सुषुम्णापथेन प्रविश मूलशृङ्गाटकम्। उल्लसोल्लस, ज्वल ज्वल, प्रज्वल-प्रज्वल-हंसः सोऽहं स्वाहा। इति परमशिवेन एकीकृतं जीवं, पुनः सुषुम्णा वर्त्मना मूलाधारे स्थापितं चिन्तयेत्।।

आत्मप्राणप्रतिष्ठा— ''आं-सोऽहम्'' हृदये हस्तं निधाय, त्रिः पठेत्। अथ मूलेन प्राणानायम्य,

३. अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः ।
ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ।।

-(इति मन्त्रम् उच्चारयन्, युगपद् वामपार्ष्णि भूतलाघातत्रय-करास्फोटनत्रय-क्रूरदृष्टयवलोकनपूर्वक-तालत्रयेण भौमान्तरिक्षदिव्यान् भेदावभासकान् विघ्नान् उत्सारयेत्।।)

**मातृकान्यासः**— अस्य श्रीसुब्रह्मण्यमातृकान्यास महामन्त्रस्य ब्रह्मा ऋषिः। गायत्रीच्छन्दः। श्रीसुब्रह्मण्यो देवता।। हल्भ्यो बीजेभ्यो नमः । स्वरेभ्यः शक्तिभ्यो नमः । बिन्दुभ्यः कीलकेभ्यो नमः ।। श्रीसुब्रह्मण्यपूजाङ्गत्वेन न्यासे विनियोगः ।।

ॐ अं कं खं गं घं ङं आं अङ्गुष्ठाभ्यां नमः । ॐ इं चं छं जं झं ञं ईं तर्जनीभ्यां नमः । ॐ उं टं ठं डं ढं णं ऊं मध्यमाभ्यां नमः । ॐ एं तं थं दं धं नं ऐं अनामिकाभ्यां नमः । ॐ ओं पं फं बं भं मं औं कनिष्ठिकाभ्यां नमः । ॐ अं यं रं लं वं शं षं सं हं ळं क्षं अः करतलकरपृष्ठाभ्यां नमः ॥ एवं हृदयादिन्यासः । ॐ भूर्भुवस्स्वरोमिति दिग्बन्धः । ध्यानम्-

पञ्चाशद्वर्णभेदैर्विहितवदनदोःपादयुक्कुक्षिवक्षो-
देशां भास्वत्कपर्दाकलितशशिकलाम् इन्दुकुन्दावदाताम् ।
अक्षस्रक्कुम्भचिन्तालिखितवरकरां त्रीक्षणामब्जसंस्थाम्
अच्छाकल्पामतुच्छस्तनजघनभरां भारतीं तां नमामि ॥

''लम्--'' इत्यादिपञ्चपूजां कृत्वा,

ॐ अं - अमरेश्वराय नमः- (शिरसि) । ॐ आं - आराध्याय नमः- (मुखवृत्ते) ॐ इं - इन्द्रपुरोगमाय नमः- (दक्षिणनेत्रे) ॐ ईं - ईशपुत्राय नमः- (वामनेत्रे) ॐ उं - उमापुत्राय नमः- (दक्षिणकर्णे) ॐ ऊं - ऊर्ध्वरेतसे नमः- (वामकर्णे) ॐ ऋं - ऋणाय नमः- (दक्षिणनासापुटे) ॐ ॠं - ॠरणाय नमः- (वामनासापुटे) ॐ ऌं - ऋषिरूपाय नमः- (दक्षिणकपोले) ॡं ॡहन्ताय नमः- (वामकपोले) ॐ एं- एकनायकाय नमः- (ऊर्ध्वोष्ठे) ॐ ऐं - ऐश्वर्यप्रदाय नमः- (अधरोष्ठे) ॐ ओं - ओजस्विने नमः- (ऊर्ध्वदन्तपङ्क्तौ) ॐ औं - औपम्यरहिताय नमः- (अधोदन्तपङ्क्तौ) ॐ अं - अम्बुजासनाय नमः- (जिह्वाग्रे) ॐ अः- अक्षीणाय नमः- (कण्ठे) ॐ कं - कमण्डलुधराय नमः (दक्षबाहुमूले) ॐ खं - खड्गपाणये नमः- (दक्षकूर्परे) ॐ गं - गङ्गासुताय नमः-

(दक्षमणिबन्धे) ॐ घं - घण्टाहस्ताय नमः - (दक्षकराङ्गुलिमूले) ॐ ङं - ङप्रियाय नमः - (दक्षकराङ्गुल्यग्रे) ॐ चं - चन्द्रशेखराय नमः - (वामबाहुमूले) ॐ छं - छन्दोमयाय नमः - (वामकूर्परे) ॐ जं-जगत्पतये नमः - (वाममणिबन्धे) ॐ झं-झषकेतुजित्पुत्राय नमः - (वामकराङ्गुलिमूले) ॐ ञं - ञंमूर्त्तये नमः - (वामकराङ्गुल्यग्रे) ॐ टं-टङ्कहस्ताय नमः - (दक्षोरुमूले) ॐ ठं - ठस्वरूपाय नमः - (दक्षजानुनि) ॐ डं - डम्बराय नमः - (दक्षगुल्फे) ॐ ढं - ढक्काप्रियाय नमः - (दक्षपादाङ्गुलिमूले) ॐ णं - णगम्याय नमः - (दक्षपादाङ्गुल्यग्रे) ॐ तं - तत्त्वरूपाय नमः - (वामोरुमूले) ॐ थं - स्थपिष्टकाय नमः - (वामजनुनि) ॐ दं - दण्डपाणये नमः - (वामगुल्फे) ॐ धं - धनुष्पाणये नमः - (वामपादाङ्गुलिमूले) ॐ नं - नगरन्ध्रकराय नमः - (वामपादाङ्गुल्यग्रे) ॐ पं - पद्महस्ताय नमः - (दक्षपार्श्वे) ॐ फं - फणिहस्ताय नमः - (वामपार्श्वे) ॐ बं - बाहुलेयाय नमः - (पृष्ठे) ओं भं भवात्मजाय नमः - (नाभौ) ॐ मं - महासेनाय नमः - ( जठरे) ॐ यं - यज्ञमूर्त्तये नमः - (हृदये) ॐ रं - रम्रणीयाय नमः - (दक्षकक्षे) ॐ लं - लम्बोदरानुजाय नमः - (गलपृष्ठे) ॐ वं - वचद्भुवे नमः - (वामकक्षे) ॐ शं - शरसम्भवाय नमः - (हृदयादिदक्षकराङ्गुल्यन्तं) ॐ षं - षण्मुखाय नमः - (हृदयादिवामकराङ्गुल्यन्तम्) - ॐ सं - सर्वलोकेशाय नमः - (हृदयादिदक्षपादांगुल्यन्तम्) ॐ हं - हरात्मजाय नमः - (हृदयादिवामपादाङ्गुल्यन्तम्) ॐ ळं - लक्ष्मीपतये नमः - (कट्यादिपादाङ्गुल्यन्तम्) ॐ क्षं - क्षमाक्षेत्राय नमः - (कट्यादि ब्रह्मरन्ध्रान्तम्)

**अष्टमूर्त्तिन्यासः**- ॐ कार्तिकेयाय नमः- ललाटे। ॐ विशाखाय नमः- फाले। ॐ गुहाय नमः - भ्रूमध्ये। ॐ असुरान्तकाय नमः- कण्ठे। ॐ सेनान्ये नमः- हृदये। ॐ षण्मुखाय नमः- नाभौ। ॐ मयूरवाहनाय नमः- लिङ्गे। ॐ शक्तिपाणये नमः- मूलाधारे।

**षडङ्गमूर्त्तिन्यासः**— ॐ सां शं सुब्रह्मण्याय नमः- हृदये। ॐ सीं रं कुमाराय नमः- शिरसि। ॐ सूं वं हरसूनवे नमः- शिखायाम्। ॐ सैं णं सुराग्रजाय नमः- कवचे। ॐ सौं भं सेनापतये नमः- नेत्रत्रये। ॐ सः वं सुरेश्वराय नमः- अस्त्रे।

**अन्तर्यागः**— स्वहृदयकमले श्रीवल्लीदेवसेनासमेत श्रीसुब्रह्मण्यमूर्त्तिं स्वात्मत्वेन विभाव्य-मूर्त्तिं ध्यायेत्।

हृदयकमलमध्ये भाति यत् चित्स्वरूपं
निखिलविबुधमृग्यं संसृतिध्वान्तभानुम्।
प्रणवमयम् अवेद्यं प्राणिनां प्राणसंस्थं
प्रकृतिविलयरूपं नौमि तत् षण्मुखाख्यम्॥

षण्मुखं द्वादशभुजं द्विषण्नयनपङ्कजम्।
कुमारं सुकुमाराङ्गं केकिवाहनमाश्रये॥

दाडिमीपुष्पसंकाशं गुञ्जाभं कुङ्कुमाङ्कितम्।
षड्वक्त्रसहितं देवं द्वादशाक्षं सुमौ लि(नि)नम्॥

चतुर्भुजम् उदाराङ्गं यज्ञसूत्रेण संयुतम्।
वरदाभयसंयुक्तं कमण्डल्वक्षधारिणम्॥

वज्रकुण्डलसंयुक्तं करण्डमकुटोज्ज्वलम्।
हारकेयूरकटक कटिसूत्रैर्विभूषितम्॥

रत्नविद्रुमभूषाढ्यं नववीर समायुतम्।
पादनूपुरसंयुक्तं सर्वाभरणभूषितम्॥

सर्वलक्षणसंयुक्तं कुमारं शङ्करात्मजम्।
महावल्लीदेवसेनायुक्तं सुरगणप्रियम्॥

इत्थंरूपं यजामीशं सर्वाभीष्टप्रदायकम्॥

(इति ध्यात्वा, पुष्पाञ्जलिम् आदाय)

तेजोरूपेण परिणतं, परशिवज्योतिरभिन्नस्वरूपं, वियदादि विश्वकारणं, स्वप्रकाशं, श्रीसुब्रह्मण्य- मूर्त्तिं सुषुम्णापथेन उद्गमय्य, विनिर्भिन्न- विधिबिलविलसद्दशशतदळकमलात् वह्नन्, नासापुटेन निर्गतां, कुसुमगर्भिते-अञ्जलौ समानीय, "ॐ ह्रीं श्रीं सुब्रह्मण्याय अमृतचैतन्यमूर्त्तिं कल्पयामि नमः।"

इति मूर्त्तिकल्पनं विभाव्य- श्रीसुब्रह्मण्यमूलमन्त्रेण देवम् आवाहयेत्। ३. आवाहितो भव। ३. संस्थापितो भव। ३. सन्निधापितो भव। ३. सन्निरुद्धो भव। ३. सम्मुखो भव। ३. अवकुण्ठितो भव॥

(वन्दन-धेनु-योनिमुद्राः च प्रदर्शयेत्॥)

**अथ उपचारः**— ॐ ह्रीं श्रीं ह्रीं व्रीं सौं सुब्रह्मण्यमूर्त्तये नमः- पाद्यं कल्पयामि नमः। अर्घ्यं कल्पयामि नमः। आचमनीयं कल्पयामि नमः। सकलतीर्थाभिषेकं कल्पयामि नमः। धौतवस्त्रं कल्पयामि नमः। गन्धान् कल्पयामि नमः। यज्ञोपवीतं कल्पयामि नमः। कुसुममालां कल्पयामि नमः। मकुटादिसर्वाभरणानि कल्पयामि नमः। मधुपर्कं कल्पयामि नमः। शुद्धाचमनीयं कल्पयामि नमः। मङ्गलहारतिं कल्पयामि नमः॥

तद्यथा-(षट्कोणे स्वाग्रादिप्रादक्षिण्येन, मध्ये च दीपान् स्थापयित्वा-अक्षतैः पूजयेत्)

ॐ वचद्भुवे नमः । ॐ जगद्भुवे नमः । ॐ विश्वभुवे नमः । ॐ रुद्रभुवे नमः । ॐ ब्रह्मभुवे नमः । ॐ भुवनभुवे नमः । ॐ षण्मुखाय नमः । (मूलेन च दीपं अभ्यर्चयेत् ।)

"ॐ जगद्ध्वनिमन्त्रमातःस्वाहा-" (इति -गन्धादिभिः घण्टां संपूज्य- तां वादयन् दीपपात्रम् आमस्तकम् उद्धृत्य- )

"ॐ-राजाधिराजाय.....महाराजाय नमः ॥"
श्रीवल्लीदेवसेना समेत सुब्रह्मण्यमूर्त्तये नमः । मङ्गलहारतिकं कल्पयामि नमः ॥ (इति देवस्य दक्षभागे स्थापयेत् ।)

" ॐ ह्रीं श्रीं ह्रीं व्रीं सौं सुब्रह्मण्यमूर्त्तये नमः ।" छत्रं कल्पयामि नमः । चामरयुगळं कल्पयामि नमः । दर्पणं कल्पयामि नमः । ताळवीजनं कल्पयामि नमः । गन्धान् कल्पयामि नमः । पुष्पं कल्पयामि नमः । धूपं कल्पयामि नमः । दीपं कल्पयामि नमः । नैवेद्यं कल्पयामि नमः । नीराजनं कल्पयामि नमः ॥

(इत्युपचारान् कृत्वा बलिं दद्यात् ।)

त्रिकोण वृत्त चतुरश्रात्मकं मण्डलं मत्स्यमुद्रया निर्माय- "ऐं व्यापकमण्डलाय नमः"= (इति मण्डलम् अभ्यर्च्य - अर्धभक्तपूरितोदकं बलिपात्रं मण्डलोपरि संस्थाप्य "सुमित्र ! इहागच्छ - आगच्छ ! बलिं गृहाण- गृहाण स्वाहा ॥ (इति दक्षकरार्पितं - वामकरतत्त्वमुद्रया स्पृष्टं सलिलं, बल्युपरि दत्त्वा - बाणमुद्रया बलिं सुमित्रेण ग्रसितं विभाव्य-योनिमुद्रया प्रणमेत्)

ततः पादौ प्रक्षाल्य-आचम्य-प्रदक्षिणनमस्कारान् कृत्वा - यथाशक्ति मूलमन्त्रं जपेत् ।।

ॐ गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम् ।
सिद्धिर्भवतु मे देव त्वत्प्रसादान्मयि स्थिरा ।।

(-इति जपं समर्पयेत् ।।)

सुब्रह्मण्यस्तोत्रम्

हृदयकमलमध्ये भाति यत् चित्स्वरूपं
निखिलविबुधमृग्यं संसृतिध्वान्तभानुम् ।
प्रणवमयमवेद्यं प्राणिनां प्राणसंस्थं
प्रकृतिविलयरूपं नौमि तत् षण्मुखाख्यम् ।।

पद्मासुरार्दनमशेष मुनीन्द्रपूज्यं
सर्वामरेन्द्र मकुटोज्ज्वलदङ्घ्रियुग्मम् ।
सर्वागमेड्यपरतत्त्वमयं षडास्यं
त्वामेव सद्गुरुमहं सततं नमामि ।।

यत्सर्वसंसृतिभयापहमेकम् ईड्यं
सद्यो मुमुक्षुभिरखण्डनिजस्वरूपम् ।
सच्चिन्मयं परमनित्यसुखात्मकं तत्
त्वामेव सद्गुरुमहं सततं नमामि ।।

संसारदुःखदव पावकदह्यमानः
शान्त्यादि सद्गुणविहीनमनास्सकामः ।
मूढोऽस्मि तद् भवविमोचनकांक्षयाद्य
त्वामेव सद्गुरुमहं सततं नमामि ।।

यत्पादपङ्कजविलोकनजातहर्षाः
बाष्पाम्बुसिक्ततनवो बहवो विमुक्ताः।
नाद्यापि मातुरुदरं क्वचिदाप्नुवन्ति
त्वामेव सद्गुरुमहं सततं नमामि ॥

कामादिभिःषडरिभिः प्रबलैः विशङ्कः
संपीड्यमान इह षण्मुख तावकोऽपि।
एषोऽस्म्यनन्यशरणः परमात्मबन्धो
त्वामेव सद्गुरुमहं सततं नमामि ॥

स्कन्द त्वदीयचरितान्यखिलामयघ्ना-
न्यत्रास्तिको नु भुवि वर्णयितुं समर्थः।
भूम्यग्निदिव्यसरितो विदुरेव शक्तिं
त्वामेव सद्गुरुमहं सततं नमामि ॥

श्रीकार्तिकेय गुह षण्मुख शक्तिपाणे
वल्लीसमेत शिखिवाहन तारकारे।
श्रीदक्षिणाननसमुद्भव पाहि नित्यं
त्वामेव सद्गुरुमहं सततं नमामि ॥

षण्मुखं द्वादशभुजं द्विषण्णयनपङ्कजम्।
कुमारं सुकुमाराङ्गं केकि वाहनमाश्रये ॥

(इति स्तुत्वा, वटुकपूजां कुर्यात्॥)

श्रीसुब्रह्मण्यमूर्त्तिं पञ्चोपचारैः उपचरेत्।

पूजासमर्पणम्

साधु वाऽसाधु वा कर्म यद्यदाचरितं मया।
तत्सर्वं कृपया देव गृहाणाराधनं तव ॥

देवनाथ गुरो स्वामिन् देशिक स्वात्मनायक।
त्राहि त्राहि कृपासिन्धो पूजां पूर्णतरं कुरु॥

(-इति देवस्य हस्ते पूजां समर्पयेत्॥)

शङ्खम् उद्धृत्य,देवस्योपरि त्रिः परिभ्राम्य, तज्जलं हस्ते आदाय, आत्मानं प्रोक्ष्य, सर्वान् जनानपि प्रोक्षेत्॥ ततः- मूलेन तीर्थप्राशनं कुर्यात्।

ज्ञानतोऽज्ञानतो वापि यन्मयाऽऽचरितं गुह।
तव कृत्यमिति ज्ञात्वा क्षमस्व शिव षण्मुख॥

-इति क्षमापयेत्॥

ॐ हृत्पद्मकर्णिका मध्ये शक्तिभिः सह षण्मुख।
प्रविश त्वं महादेव सर्वैरावरणैः सह॥

-इति खेचर्या तेजोरूपेण परिणतं देवं, पूर्ववद् हृदयं नीत्वा, तत्र देवं पञ्चोपचारैः संपूज्य, आत्माऽभिन्नसंविद्रूपेण भावयेत्।

## ॥ श्रीसुब्रह्मण्यावरणपूजाक्रमः ॥

बिन्दु-त्रिकोण-षट्कोण-षड्दल-द्वादशदल-त्रिवलय-भूपुरत्रयात्मके यन्त्रे श्रीसुब्रह्मण्यावरणपूजां कुर्यात्।

अथाहं बैन्दवे चक्रे सत्यसिंहासने शुभे।
समासीनं गुहं वन्दे परं ब्रह्मण्यसंज्ञकम्॥

इति पुष्पाञ्जलिं दत्वा बिन्दौ मूलेन। ब्रह्मण्यश्रीपादुकां पूजयामि तर्पयामि नमः। इति दशवारं संतर्प्य। अग्नीशासुरवायुकोणेषु मध्ये दिक्षु च षडङ्गार्चनम्-

ॐ ह्रीं श्रीं ऐं क्लीं सौः । ब्रं हृदयाय नमः । हृदयशक्तिश्रीपादुकां पूजयामि तर्पयामि नमः । ६ ह्मं शिरसे स्वाहा । शिरः शक्तिश्री— । ६. ण्यं शिखायै वषट् । शिखाशक्तिश्री — । ६. यं कवचाय हुं । कवचशक्तिश्री — । ३. नं नेत्रत्रयाय वौषट् । नेत्रशक्तिश्री- । ६. मं अस्त्राय फट् । अस्त्रशक्तिश्री— ।

गुरुमण्डलार्चनं त्रिरेखासु—

६. दिव्यसिद्धमानवौघेभ्यो नमः । इति पुष्पाञ्जलिं दत्वा । दिव्यौघः— । प्रथमरेखायां— ६. दक्षिणामूर्तिश्री । ६. नारायणश्री० । ६. ब्रह्मश्री ० । ६. सनकश्री ० । ६. सनातनश्री ० । ६. सनन्दनश्री ० । ६. सनत्कुमारश्री ० ।

सिद्धौघः— द्वितीयरेखायां— ६. कश्यपश्री ० । ६. अत्रिश्री ० । ६. भरद्वाजश्री ० । ६. विश्वामित्रश्री ० । ६. गौतमश्री ० । ६. जमदग्निश्री ० । ६. वसिष्ठश्री ० । ६. शुकश्री ० । ६. अगस्त्यश्री ० । ६. ऋभुश्री ० । ६. निदाघश्री ० । ६. दत्तात्रेयश्री ० ।

मानवौघः— तृतीयरेखायां— ६. गोरक्षानन्दनाथश्री ० । ६. मत्स्यानन्दनाथश्री ० । ६. कोङ्कणानन्दनाथश्री ० । ६. भोगानन्दनाथश्री ० । ६. कल्हाटानन्दनाथ श्री ० । ६. वीरेन्द्रानन्दनाथ श्री ० । ६. मलयाचलानन्दनाथश्री ० । ६. मध्यानन्दनाथश्री ० । ६. गिरानन्दनाथ श्री ० । ६. परमेष्ठिगुरुश्री ० । ६. परमगुरुश्री ० । ६. स्वगुरुश्री ० ।

गन्ध-पुष्प-धूप-दीप-नैवेद्य-ताम्बूल-नीराजनाद्युपचारान् कृत्वा।

आवरणपूजा ।

सच्चिदानन्द सर्वज्ञ सुब्रह्मण्य शिवात्मक।
अनुज्ञां देहि मे स्वामिन् परिवारार्चनाय ते॥

प्रथमावरणम् (भूपुरत्रये)

ॐ ह्रीं श्रीं ऐं क्लीं सौः। हं दिक्चक्राय नमः। इति पुष्पाञ्जलिं दत्वा ।

प्रथमरेखायाम्— ६. अणिमासिद्धिश्री ०। ६. महिमासिद्धिश्री ०। ६. गरिमासिद्धिश्री ०। ६. लघिमासिद्धिश्री ०। ६. प्राप्तिसिद्धिश्री ०। ६. प्राकाम्यसिद्धि श्री ०। ६. ईशित्वसिद्धिश्री ०। ६. वशित्वसिद्धिश्री ०।

द्वितीयरेखायाम्— ६. विवेकश्री ०। ६. वैराग्यश्री ०। ६. शमश्री ०। ६. दमश्री ०। ६. उपरतिश्री ०। ६. तितिक्षाश्री ०। ६. श्रद्धाश्री ०। ६. समाधानश्री ०। ६. मुमुक्षुताश्री ०। ६. श्रवणश्री ०। ६. मननश्री ०। ६. निदिध्यासनश्री ०।

तृतीयरेखायाम्— ६. वीरबाहुश्री ०। ६. वीरकेसरिश्री ०। ६. वीरमाहेन्द्रश्री ०। ६. वीरमहेशश्री ०। ६. वीरपुरन्दरश्री ०। ६. वीरराक्षस ०। ६. वीरमार्ताण्डश्री ०। ६. वीरान्तकश्री ०। ६. वीरधीरश्री ०। ६. दिक्चक्राधिष्ठितचिदग्निस्वरूपापरिच्छिन्नपरब्रह्मश्री ०। मूलेन त्रिः संतर्प्य गन्धाद्युपचारान् कृत्वा।

६. अभीष्टसिद्धिं मे देहि शरणागतवत्सल।
भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम्॥

इति सामान्यार्घ्यं देवस्य वामहस्ते समर्प्य । अनेन प्रथमावरणार्चनेन भगवान् सर्वदेवात्मकः श्रीसुब्रह्मण्यः प्रीयताम्। योनिमुद्रया प्रणमेत्।

द्वितीयावरणम्—(वृत्तत्रये)

६. सं रं तं गुणचक्राय नमः। इति पुष्पाञ्जलिं दत्वा।

प्रथमवृत्ते— ६. सत्वगुण ०। ६. रजोगुण ०। ६. तमोगुण ०। ६. माया ०। द्वितीयवृत्ते- ६. परावाग्देवता ०। ६. पश्यन्तीवाग्देवता ०। ६. मध्यमावाग्देवता ०। ६. वैखरी वाग्देवता ०। तृतीयवृत्ते— ६. भूतपञ्चक ०। ६. गुणपञ्चक ०। ६. ज्ञानेन्द्रियपञ्चक ०। ६. कर्मेन्द्रियपञ्चक ०। ६. सं रं तं गुणचक्राधिष्ठितगुणातीतस्वरूपनिस्त्रैगुण्यपरब्रह्मश्री ०। (मध्ये)

(मूलेन त्रिः संतर्प्य गन्धाद्युपचारान् कृत्वा)

६. अभीष्टसिद्धिं मे देहि शरणागतवत्सल।
भक्त्या समर्पये तुभ्यं द्वितीयावरणार्चनम्॥

इति सामान्यार्घ्यं देवस्य वामहस्ते समर्प्य । अनेन द्वितीयावरणार्चनेन भगवान्+प्रीयताम्। योनिमुद्रया प्रणमेत्।

तृतीयावरणम्। (द्वादशदलकमले)

६. कं कालचक्राय नमः । इति पुष्पाञ्जलिं दत्वा। ६. कलाश्री ०। ६. काष्ठा ०। ६. घटिका ०। ६. मुहूर्त ०। ६. दिवस ०। ६. पक्ष ०। ६. मास ०। ६. ऋतु ०। ६. अयन ०। ६.

संवत्सर ० । ६. युग ० । ६. काल ० । ६. कालचक्राधिष्ठितकाल-कालस्वरूप नित्यपरब्रह्मश्रीपा ० । मूलेन त्रिः संतर्प्य गन्धाद्युपचारान् कृत्वा

६. अभीष्टसिद्धिं मे देहि शरणागतवत्सल।
भक्त्या समर्पये तुभ्यं तृतीयावरणार्चनम्॥

सामान्यार्घ्यं देवस्य वामहस्ते समर्प्य । अनेन तृतीयावरणार्चनेन भगवान् + प्रीयताम्। योनिमुद्रया प्रणमेत्।

तुरीयावरणम् (षड्दळपद्मे)

६. सं सर्वज्ञचक्राय नमः । इति पुष्पाञ्जलिं दत्वा । ६. सर्वज्ञशक्ति ० । ६. नित्यतृप्तशक्ति ० । ६. अनादिबोधशक्ति ० । ६. स्वतन्त्रशक्ति ० । ६. अनन्तबोधशक्ति ० । ६. भूलोक ० । ६. अग्निमण्डल ० । ६. अन्तरिक्ष ० । ६. सूर्यमण्डल ० । ६. स्वर्ग ० । ६. सोममण्डल ० । ६. सं सर्वज्ञचक्राधिष्ठितभूमा-स्वरूपसर्वैश्वर्यप्रदपरब्रह्मश्री ० । मूलेन त्रिः संतर्प्य गन्धाद्युपचारान् कृत्वा।

६. अभीष्टसिद्धिं मे देहि शरणागतवत्सल।
भक्त्या समर्पये तुभ्यं तुरीयावरणार्चनम्॥

सामान्यार्घ्यं देवस्य वामहस्ते समर्प्य । अनेन तुरीयावरणार्चनेन भगवान् + प्रीयताम्। योनिमुद्रया प्रणमेत्।

पञ्चमावरणम् (षट्कोणचक्रे)

६. ऐं वाग्भवचक्राय नमः । इति पुष्पाञ्जलिं दत्वा । ६. प्रज्ञानं ब्रह्म । ऋग्वेदमयमहावाक्यश्रीपादुकां + नमः । ६. अहं ब्रह्मास्मि । यजुर्वेदमयमहावाक्यश्रीपादुकां + नमः । ६.

तत्वमसि। सामवेदमयमहावाक्यश्रीपादुकां + नमः । ६. अयमात्मा ब्रह्म। अथर्ववेदमयमहावाक्यश्रीपादुकां + नमः।

६. शीक्षाशास्त्रश्री ० । ६. कल्पशास्त्रश्री ० । ६. व्याकरणशास्त्रश्री ० । ६. छन्दःशास्त्रश्री ० । ६. ज्योतिश्शास्त्रश्री ० । ६. निरुक्तशास्त्रश्री ० । ६. ॐ ह्रीं नमः शिवाय । शैवदर्शनश्री ० । ६. ॐ नमो नारायणाय । वैष्णवदर्शन ० । ६. ॐ श्रीं ह्रीं श्रीं । शाक्तदर्शन ० । ६. ॐ गं गणपतये नमः । गाणापत्यदर्शन ० । ६. ॐ ह्रीं घृणिः सूर्य आदित्यों । सौरदर्शन ० । ६. ॐ भं भैरवाय नमः । कापालिकदर्शन ०। ६. परशिलापीठ ०। ६. जयन्तीपीठ ०। ६. शुद्धचित्तपीठ ०। ६.पूर्णगिरिपीठ ०। ६. पूर्णफलपीठ ०। ६. वनगिरिपीठ ० । ६. ऐं वाग्भवचक्राधिष्ठित-वाचामगोचरस्वरूपपरब्रह्मश्री ० । (मूलेन त्रिः संतर्प्य गन्धपुष्पाद्युपचारान् कृत्वा।)

६. अभीष्टसिद्धिं मे देहि शरणागतवत्सल।
भक्त्या समर्पये तुभ्यं पञ्चमावरणार्चनम्॥

सामान्यार्घ्यं देवस्य वामहस्ते । समर्प्य अनेन पञ्चमावरणार्चनेन भगवान्+प्रीयताम्। योनिमुद्रया प्रणमेत्।

षष्ठावरणम् (त्रिकोणे)

६. क्लीं। शक्तिचक्राय नमः। इति पुष्पाञ्जलिं दत्वा। ६. अं अकारात्मक- इच्छाशक्तिस्वरूपवाणीसमेतब्रह्म ०। ६.। उं उकारात्मकज्ञानशक्ति -स्वरूपवैष्णवीसमेतविष्णु ०। ६. मं। मकारात्मकक्रियाशक्तिस्वरूपरुद्राणीसमेतरुद्र ० । ६. ॐ ।

ओंकारात्मकपराशक्तिस्वरूपमायाविशिष्टकारणेश्वर ० । ह्. सत्स्वरूपविद्याशक्ति ० । ह्. चित्स्वरूपविद्याशक्ति ० । ह्. आनन्दस्वरूपविद्याशक्ति ० । ह्. क्लीं शक्तिचक्राधिष्ठितविद्या-स्वरूपपरब्रह्मश्री ० । मूलेन त्रिः संतर्प्य । गन्धाद्युपचारान् कृत्वा ।

ह्. अभीष्टसिद्धिं मे देहि शरणागतवत्सल ।
भक्त्या समर्पये तुभ्यं षष्ठाख्यावरणार्चनम् ॥

सामान्यार्घ्यं देवस्य वामहस्ते समर्प्य । अनेन षष्ठावरणार्चनेन भगवान् + प्रीयताम् । योनिमुद्रया प्रणमेत् ।

सप्तमावरणम् (बिन्दौः)

ह्. परब्रह्मचक्राय नमः । इति पुष्पाञ्जलिं दत्वा । ह्. मूलं । ब्रह्मण्यश्रीपादुकां + नमः । ह्. परब्रह्मचक्राधिष्ठित-परब्रह्मश्रीपादुकां पूजयामि तर्पयामि नमः । मूलेन त्रिः संतर्प्य । गन्धाद्युपचारान् कृत्वा ।

ह्. अभीष्टसिद्धिं मे देहि शरणागतवत्सल
भक्त्या समर्पये तुभ्यं सप्तमावरणार्चनम् ॥

सामान्यार्घ्यं देवस्य वामहस्ते दत्वा । अनेन सप्तमावरणार्चनेन भगवान् सर्वदेवात्मकः श्रीसुब्रह्मण्यः प्रीयताम् । योनिमुद्रया प्रणमेत् ।

ततः श्रीसुब्रह्मण्यसिद्धनामाष्टोत्तरशतनामभिः संपूज्य । धूप-दीप-नैवेद्य-ताम्बूल - नीराजन -मन्त्रपुष्पाणि समर्पयेत् ।

—*—*—

## सुब्रह्मण्यमन्त्रसम्मेलनत्रिशती

(सृष्टि-स्थिति-संहार-तिरोधान-अनुग्रह-पञ्चकृत्य-पञ्चब्रह्म-हृदयाद्यङ्ग- शिवपञ्चाक्षर-अकारादिक्षकारान्तमातृका-वर्ण-सबीजमूलमन्त्रसंमेलनात्मक-श्रीसुब्रह्मण्यसर्वशत्रुसंहार - त्रिशत्यर्चना)

वन्दे गुरुं गणपतिं स्कन्दमादित्यमम्बिकाम्।
दुर्गां सरस्वतीं लक्ष्मीं सर्वकार्यार्थसिद्धये॥
महासेनाय विद्महे षडाननाय धीमहि।
तन्नः स्कन्दः प्रचोदयोत्।

### नकारादिनामानि-५०

ओं नं सौं ईं नं ळं श्रीं शरवणभव हं सद्योजात
हां हृदय - ब्रह्म - सृष्टिकारण - सुब्रह्मण्य

(इति मूलं प्रतिनाम योजयेत्)

शिव-नाथाय नमः। निर्लेपाय। निर्ममाय। निष्कलाय। निर्मोहाय। निर्मलाय। निर्विकराय। निराभासाय। निर्विकल्पाय। नित्यतृप्ताय। निवृत्तकाय। निरुपद्रवाय। निधीशाय। निर्ममप्रियाय। नित्ययोगिने। नित्यशुद्धाय। निधीनांपतये। नित्यनियमाय। निष्कारणाय। निस्सङ्गाय। निधिप्रियाय। नित्यभृतये। नित्यवस्तुने। नित्यानन्दगुरवे। नित्यकल्याणाय नमः। (२५)

निधात्रे नमः। निरामयाय। नित्ययोगि साक्षिप्रियवादाय। नागेन्द्रसेविताय। नारदोपदेशकाय। नग्नरूपाय।

नानापापध्वंसिने। नागपीठस्थाय। नादान्तगुरवे। नागसुतगुरवे। नादसाक्षिणे । नागपाशहराय। नागास्त्रधराय । नटनप्रियाय । नन्दिध्वजिने । नवरत्नपादुकापादाब्जाय । नटेशप्रियाय । नववैडूर्यहारकेयूरकुण्डलाय । निमिषात्मने । नित्यबुद्धाय । नमस्कारप्रियाय। नादबिन्दुकलामूर्तये। नित्यकौमारवीरबाहवे। नित्यानन्द देशिकाय। नकाराद्यन्त संपूर्णाय नमः। (५०)

## मकारादिनामानि

ओं मं सौं ईं नं ळं ह्रीं रवणभवश हिं वामदेव ह्रीं शिरो-विष्णु-स्थितिकारण-सुब्रह्मण्य

(इति मूलं प्रतिनाम योजयेत्।)

महाबलाय नमः । महोत्साहाय। महाबुद्धये। महाबाहवे। महामायाय। महाद्युतये। महाधनुषे। महाबाणाय। महाखेटाय। महाशूलाय । महाधनुर्धराय। महामयूरारूढाय । महादेवप्रियात्मजाय। महासत्वाय। महासौम्याय। महाशक्तये। महामायास्वरूपाय । महानुभावाय । महाप्रभवे । महागुरवे । महारसाय । महारथारूढाय । महाभागाय । महामकुटाय । महागुणाय नमः (७५)।

मन्दारशेखराय नमः । महाहाराय। महामातङ्गगमनाय। महासंगीत रसिकाय । मधुपानप्रियाय । मधुसूदनप्रियाय । महाप्रशस्ताय। महाव्यक्तये। महावक्त्राय। महायशसे। महामात्रे। महामणिगजारूढाय। महात्मने। महाहविषे। महिमाकाराय। महामार्गाय । मदोन्मत्तभैरवपूजिताय । महावल्लीप्रियाय । मदनाकारवल्लभाय । मन्दारकुसुमप्रियाय । मांसाकर्षणाय।

मण्डलत्रयवासिने । महाभोगाय । महासेनान्ये । मकाराद्यन्त संपूर्णाय नमः ।। (१००)

## शकारादिनामानि ५०

ओं शिं सौं ईं नं ळं क्लीं वणभवशर हुं अघोर हूं शिखा-रुद्र-
संहारकारण-सुब्रह्मण्य
(इति मूलं प्रतिनाम योजयेत्।)

शिवानन्दगुरवे नमः । शिवसच्चिदानन्दस्वरूपाय । शिखण्डिमण्डलावासाय । शिवप्रियाय । शरवणोद्भूताय । शिवशक्तिवदनाय। शङ्करप्रियसुताय । शूरपद्मासुरद्वेषिणे । शूरपद्मासुरहन्त्रे। शूराङ्गध्वंसिने। शुक्लरूपाय। शुद्धायुध धराय। शुद्धवीरप्रियाय । शुद्धवीरयुद्धप्रियाय । शुद्धमानसनिलयाय । शून्यषट्कवर्जिताय । शुद्धतत्वसंपूर्णाय । शंखचक्रकुलिश-ध्वजरेखांघ्रिपङ्कजाय। शुद्धयोगिनीगणदात्रे। शोक पर्वतदंष्ट्राय। शुद्धरणप्रियपण्डिताय। शरभवेगायुधधराय। शरपतये। शाकिनी डाकिनी सेवितपादाब्जाय । शंखपद्मनिधि सेविताय नमः । (१२५)

शतसहस्रायुधधरमूर्तये नमः । शिवपूजकमानसनिलयाय। शिवदीक्षागुरवे । शूरवाहनाधिरूढाय । शोकरोगनिवारणाय । शुचये । शुद्धाय। शुद्धकीर्तये । शुचिश्रवसे । शक्तये । शत्रुक्रोधविमर्दनाय । श्वेतप्रभाय । श्वेतमूर्तये। श्वेतात्मकाय । शारणकुलान्तकाय। शतमूर्तये। शतायुधाय। शरीर त्रयनायकाय। शुभलक्षणाय । शुभाशुभवीक्षणाय । शुक्रशोणितमध्यस्थाय। शुण्डादण्डफूत्कारसोदराय । शून्य मार्गतत्परसेविताय । शाश्वताय । शिकाराद्यन्त संपूर्णाय नमः ।। (१५०)

# वकारादिनामानि-५०

ओं वं सौं ईं नं ळं ऐं णभवशरव हें तत्पुरुष हैं महेश्वर-
तिरोभावकारण-सुब्रह्मण्य

(इति मूलं प्रतिनाम योजयेत्)

वल्लीमानसहंसिकाय नमः । विष्णवे । विदुषे । विद्वज्जन प्रियाय । वेलायुधधराय । वेगवाहनाय । वामदेवमुखोत्पन्नाय । विजयकर्त्रे । विश्वरूपाय । विन्ध्यस्कन्दाद्रिनटनप्रियाय । विश्वभेषजाय । वीरशक्तिमानसनिलयाय । विमलासनोत्कृष्टाय । (विलासनोत्कृष्टदेहाय) वाग्देवीनायकाय । वौषडन्तसंपूर्णाय । वाचामगोचराय । वासनागन्धद्रव्यप्रियाय । वादबोधकाय । वादविद्यागुरवे । वायुसारथ्यमहारथारूढाय । वासुकि सेविताय । वातुलागमपूजिताय । विधिबन्धनाय । विश्वामित्रमखरक्षिताय । वेदान्तवेद्याय नमः । (१७५)

वीतरागसेविताय नमः । वेदचतुष्टयस्तुत्याय (स्तुताय) । वीरप्रमुखसेविताय । विश्वभोक्त्रे । विशां पतये । विश्वयोनये । विशालाक्षाय । वीरसेविताय । विक्रमोपरिवेषाय । वरदाय । वरप्रदानां श्रेष्ठाय । वर्धमानाय । वारिसुताय । वानप्रस्थाय । वीरबाह्वादिसेविताय । विष्णुब्रह्मादिपूजिताय । वीरायुधसमावृताय । वीरशूरमर्दनाय । व्यासादिमुनिपूजिताय । व्याकरणादिशास्त्रनवोत्कृष्टाय । विश्वतोमुखाय । वासवादि पूजितपादाब्जाय । वसिष्ठहृदयांभोजनिलयाय । वाञ्छितार्थप्रदाय । वकाराद्यन्तसंपूर्णाय नमः । (२००)

## यकारादिनामानि-५०

ओं यं सौं ईं नं ळं सौः भवशरवण ह्रों ईशान ह्रौं नेत्रत्रय-सदाशिवानुग्रहकारण-सुब्रह्मण्य

(इति मूलं प्रतिनाम योजयेत्।)

योगिहृत्पद्मवासिने नमः। याज्ञिकवर्धिने। यजनादि षट्कर्म तत्पराय। यजुर्वेदस्वरूपाय। यजुषे। यज्ञेशाय। यज्ञश्रिये। यज्ञराजे। यज्ञपतये। यज्ञमयाय। यज्ञभूषणाय। यज्ञफलदाय। यज्ञाङ्गभुवे। यज्ञभूताय। यज्ञसंरक्षिणे। यज्ञपण्डिताय। यज्ञविध्वंसिने। यज्ञमेषगर्वहराय। यजमानस्वरूपाय। यमाय। यमधर्मपूजिताय। यमाद्यष्टाङ्गसाधकाय। युद्धगंभीराय। युद्धहरणाय। युद्धनाथाय नमः। २२५

युगान्तकृते नमः। युगावृत्ताय। युगनाथाय। युगधर्मप्रवर्तकाय। युगमालाधराय। योगिने। योगवरदाय। योगिनां वरप्रदाय। योगीशाय। योगानन्दाय। योगभोगाय। योगाष्टाङ्गसाक्षिणे। योगमार्गतत्परसेविताय। योगयुक्ताय। योगपुरुषाय। योगनिधये। योगविदे। योगसिद्धिदाय। युद्ध शत्रुभयङ्कराय। युद्धशोकमर्दनाय। यशस्विने। यशस्कराय। यन्त्रिणे। यन्त्रनायकाय। यकाराद्यन्तसंपूर्णाय नमः॥ २५०

## मातृकाक्षरादिनामानि ५०

ओं नमः शिवाय सौं ईं नं ळं श्रीं ह्रीं क्लीं ऐं सौः वशरवणभ हं अधोमुख हः अस्त्र-परब्रह्म- पञ्चकृत्यकारण सुब्रह्मण्य

(इति मूलं प्रतिनाम मातृकाबीजमनु योजयेत्।)

अं (मूलं) अस्त्रशिवास्त्रपाशुपतवैष्णवब्रह्मास्त्रधृते नमः । आं.....आनन्दसुन्दराकाराय। इं.....इन्द्राणीमाङ्गल्यरक्षकाय। ईं.....ईषणात्रयवर्जिताय । उं.....उमासुताय । ऊं.......ऊर्ध्वरेतः सुताय। ऋं........ऋणत्रयविमोचनाय । ॠं.... ऋतंभरात्मज्योतिषे । लृं लुप्ताचारमनोदूराय । लॄं.....लूतभाव पाशभेदिने । एं.......एणाङ्कधर सत्पुत्राय । ऐं.......ऐशानपदसन्दायिने । ओं........ ओङ्कारार्थ-श्रीमद्गुरवे। औं ........ औन्नत्यप्रदायकाया अं..... अस्त्रकुक्कुटक्षुरिका वृषभशुद्धास्त्रधराय। अः......अद्वैतपरमानन्द चिद्वि लासमहानिधये। कं........कार्यकारणनिर्मुक्ताय । खं.......खण्डेन्दुमौ लितनयाय। गं..... गद्यपद्यप्रीतिज्ञाय। घं.......घनगंभीरभूषणाढ्याय । ङं.......ङकाराकारकद्वन्द्व सर्वसन्ध्यात्मचिन्मयाय । चं......चिदानन्दमहासिन्धु मध्यरत्नशिखामणये । छं......छेदिताशेषदैत्यौघाय । जं......जरामरणनिवर्तकाय। झं.......झल्लरीवाद्यसुप्रियाय। (२७५)

ञं.......ज्ञानोपदेशकर्त्रे। टं.....टङ्किताखिललोकाय।

ठं.......ठकारमध्यनिलयाय। डं.......डक्कानिनादप्रीतिकराय।

ढं.....ढालितासुरकुलान्तकाय। णं...... णबिन्दुत्रयवन्मध्य-बिन्द्वाश्लिष्टसुवल्लिकाय । तं..... तुंबुरुनारदार्चिताय । थं.......स्थूलसूक्ष्मप्रदर्शकाय । दं.......दान्ताय । धं......धनुर्बाणनाराचास्त्रधराय । नं.......निष्कण्टकाय । पं......पिण्डिपालमुसलदण्डखड्गखेटकधराय । फं....... फणिलोकविभूषणाय । बं.....बहुदैत्यविनाशकाय ।

भं......भक्तसालोक्य सारूप्यसामीप्यसायुज्यदायिने ।
मं........महाशक्तिशूलगदापरशुपाशाङ्कुशधृते ।
यं......यन्त्रतन्त्रभेदिने । रं......रजस्सत्वगुणान्विताय ।
लं......लोकातीतगुणोपेताय । वं......विकल्पपरिवर्जिताय ।
शं.....शङ्ख चक्रकुलिशध्वजधराय । षं......षट्चक्रस्थाय ।
सं......सर्वमन्त्रार्थसर्वज्ञत्वमुख्यबीज स्वरूपाय ।
हं....हृदयांबुजमध्यस्थविरजव्योमनायकाय । ळं......लोकैकनाथाय नमः ।। ३००

क्षं.....एकपञ्चदशा(श्चादशा) क्षरसंपूर्णाय नमः ।

अं आं इं ईं उं ऊं ऋं ङं लृं लॄं एं ऐं ओं औं अं अः कं खं गं घं ङ चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं ळं क्षं नमः शिवाय वभणवरश हं हिं हुं हैं हों हं सद्योजात-वामदेव-अघोर - तत्पुरुष - ईशान - अधोमुख - हां हीं हूं हैं हौं हः हृदय - शिरः- शिखा- कवच - नेत्रत्रय - अस्त्र - ब्रह्म - विष्णु - रुद्र - महेश्वर - सदाशिव - परब्रह्म - सृष्टि- स्थिति- संहार - तिरोभाव - अनुग्रह - पञ्चकृत्यकारणाय जगद्भुवे वचद्भुवे विश्वभुवे रुद्रभुवे ब्रह्मभुवे अग्निभुवे लं वं रं यं हं सं सर्वात्मकाय ओं ह्रीं व्रीं सौः शरवणभव ओं सर्वलोकं मम वशमानय मम शत्रुसंक्षोभणं कुरु कुरु मम शत्रून्नाशय नाशय, मम शत्रून्मारय मारय षण्मुखाय मयूरवाहनाय सर्वराजभयनाशनाय स्कन्देश्वराय वभणवरश क्षं क्षीं क्षूं क्षैं क्षौं क्षः हुं फट् स्वाहा नमः ।।

# शत्त्यर्चनम्

४=ओं श्रीं ह्रीं क्लीं इति मूलं प्रतिनाम योजयेत्।

ऐं सौं निखिलजगदण्डषण्डभूत- तनुकुरुंब जलधिस्थानीय - परप्रकृतिरूप - ज्ञानानन्दस्वरूपिणी परा शक्तिरेव गुहहस्तविलसन्ती, निधिस्वरूपमहाशत्त्यायुधाय नमो नमः।

गुहहस्तनिधिस्वरूप सर्व शत्त्यै नमो नमः।

क्रां क्रूं नमः शिवाय शरवणभव नशिमशि हरण हरण पाशपालि सिंहवक्त्र्यै नमो नमः।

ऐं द्रीं द्रूं नमः शिवाय शरवणभव नशिमशि सकलजगत्सृष्टिस्थिति संहारतिरोधानुग्रहप्रसादिन्यै नमो नमः।

रां रीं रूं लुं नमः शिवाय शरवणभव नशि मशि कालान्तक कोट्यादित्यप्रदीप्तायै नमो नमः।

लां लीं लूं नमः शिवाय शरवणभव नशि मशि चट चट प्रचट प्रचट काल कालाग्निरूप निष्कलायै नमो नमः।

ह्रां ह्रीं ह्रूं नमः शिवाय शरवणभव नशिमशि प्रचण्ड मारुत क्षिप्राग्र सकल वीर्योदक पानरक्ताक्ष्यै नमो नमः।

सां सीं सूं नमः शिवाय शरवणभव नशिमशि एकादशशत सहस्रकोटिकोटिवदनायै नमो नमः।

क्रां क्रीं क्रूं नमः शिवाय शरवणभव नशिमशि काल कूटाग्नि भयंकर (महारुद्रज्वाला) रौद्रवदनप्रकाशिकायै नमो नमः॥

ह्रां ह्रीं ह्रूं नमः शिवाय शरवणभव नशिमशि अतलादिसर्व (सप्त) लोकनागेन्द्रभयङ्करज्वाला सहस्रवदनायै नमो नमः।

लां लीं लूं नमः शिवाय शरवणभव नशिमशि रक्त-सानूपमस्कन्ध महाचलसैकतप्रायवज्रबाहु महाबलायै नमो नमः ।

लैं लौं लः नमः शिवाय शरवणभव नशिमशि सहस्रकोटि - कोट्यण्ड-देवतास्त्र शस्त्रसृष्टिकारणदृष्टिजात-वदनायै नमो नमः ।।

ह्रां ह्रूं ह्रैं नमः शिवाय शरवणभव नशिमशि सत्यलोकान्तचराचर सहस्रकोट्यण्डभस्मधारणसुदेहायै नमो नमः ।

सां सीं सूं नमः शिवाय, शरवणभव नशिमशि देवर्षि गणपूजितांघ्रिपादयुगलायै नमो नमः ।

क्रां क्रीं क्रूं नमः शिवाय शरवणभव नशि मशि देवगन्धर्वयक्षराक्षसवीर्यवीरसर्वजीवमधुप्रायभक्षिण्यै नमो नमः ।

लां लीं लूं नमः शिवाय शरवणभव नशिमशि मधुवारिधिसप्तपानधूलितप्रचण्डमारुतक्षिप्रवेगायै नमो नमः ।

ह्रां ह्रीं ह्रूं ह्रैं नमः शिवाय शरवणभव नशिमशि समस्त मन्त्र तन्त्र यन्त्र विषविषूच्याभिचारशून्यब्रह्महत्यादि पापध्वंसिन्यै नमो नमः ।

कं खं गं घं ङं ह्रीं नमः शिवाय शरवणभव नशिमशि मूलाधाराम्बुजारूढा वल्लभावामायै गुहास्त्रमूलप्रकृत्यै नमो नमः ।

चं छं जं झं ञं श्रीं नमः शिवाय शरवणभव नशिमशि स्वाधिष्ठानांबुजारूढाज्येष्ठारौद्रीगुहास्त्रवागीश्वर्यै नमो नमः ।

टं ठं डं ढं णं क्लीं नमः शिवाय शरवणभव नशि मशि मणिपूरकांबुजारूढा नारायणी काली कलविकरणी गुहास्त्रमहालक्ष्म्यै नमो नमः ।

तं थं दं धं नं सः सौः क्लीं नमः शिवाय शरवणभव नशि मशि अनाहतांबुजारूढा महारौद्री बलविकरणी गुहास्त्रसंहाररूपायै (रौद्र्यै) नमो नमः ।

पं फं बं भं मं सैं सूं ह्रीं नमः शिवाय शरवणभव नशि मशि विशुद्ध्यारोहणबलाकी बलप्रमथिनी गुहास्त्रगौर्यै नमो नमः ।

यं रं लं वं शं षं सीं सां नमः शिवाय शरवणभव नशि मशि आज्ञाकलारूढ सर्वभूतदमनी गुहास्त्र मनोन्मन्यै नमो नमः ।

सं हं क्लां क्लीं क्लूं सौं ऐं नमः शिवाय शरवणभव नशि मशि सहस्रारांबुजा रूढा-इच्छाज्ञानक्रियाशक्त्यै नमो नमः ।

ळं क्षं क्यां क्यीं क्यूं सौं ऐं नमः शिवाय शरवणभव नशि मशि सद्गुरुस्वरूपिण्यै नमो नमः ।

अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं एं ऐं ओं औं अं अः कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं त थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं ळं क्षं ओं श्रीं ह्रीं क्लीं ऐं ईं नं ळं सौं नमः शिवाय शरवणभव नशिमशि बिन्दुनादद्वादशान्तारूढरूपिणीपराशक्त्यै नमो नमः ।

## मूलमन्त्रम्

ओं सां सीं सूं सैं सौं सः श्रीं ऐं क्लीं ऐं सौं ज्वल ज्वालायै कोटिसूर्यप्रकाशायै महाशत्रुभयङ्करायै लं रं दशास्य करविंशत्यै सौं मुं पराशक्त्यै हुं फट् स्वाहा ।

ॐ नमो भगवते षडाननाय ।।

# सुब्रह्मण्याराधनम्

प्रक्षाळितपाणिपादः

देवसेनापते वल्लीदेवीहृत्कञ्जमन्दिर।
यावत्पूजां करिष्येऽहं प्रसन्नो भव मे प्रभो ॥

इति संप्रार्थ्य आसनं परिकल्प्य, आचम्य,

शुक्लांबरधरं विष्णुं शशिवर्णं चतुर्भुजम्।
प्रसन्नवदनं वन्दे सर्वविघ्नोपशान्तये ॥

प्राणानायम्य आदौ गणपतिपूजा सङ्कल्पः,

तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव।
विद्याबलं दैवबलं तदेव लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि ॥

करिष्यमाणस्य कर्मणः अविघ्नेन परिसमाप्त्यर्थं आदौ महागणपतिपूजां करिष्ये, तदङ्गं कलशपूजां च करिष्ये, इति सङ्कल्प्य,

कलशपूजा— कलशं गन्धपुष्पाक्षतैरभ्यर्च्य, कलशं स्पृशन्

कलशस्य मुखे विष्णुः कण्ठे रुद्रस्समाश्रितः।
मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥

कुक्षौ तु सागरास्सर्वे सप्तद्वीपा वसुन्धरा।
ऋग्वेदोऽथ यजुर्वेदः सामवेदोऽप्यथर्वणः ॥

अङ्गैश्च सहिताः सर्वे कलशांबु समाश्रिताः।
सर्वे समुद्राः सरितस्तीर्थानि च नदा ह्रदाः।
आयान्तु देवपूजार्थं दुरितक्षयकारकाः ॥

गङ्गे च यमुने चैव गोदावरि सरस्वति ।
नर्मदासिंधुकावेर्यो जले कुरुत सन्निधिम् ॥

मन्त्रः- आपो वा इदँ सर्वं विश्वा भूतान्यापः प्राणा वा आपः पशव आपोऽन्नमापोऽमृतमापस्सम्राडापो विराडापस्स्वराडाप-श्छन्दाँस्यापो ज्योतींष्यापो यजूँष्यापस्सत्यमापस्सर्वा देवता आपो भूर्भुवस्सुवराप ओं इति जपित्वा कलशोदकेन पूजाद्रव्याणि देवमात्मानञ्च प्रोक्ष्य

गणपति पूजा ॥ "गणानां त्वा गणपतिँ हवामहे कविं कवीनामुपमश्रवस्तमम् । ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आनश्शृण्वन्नूतिभिस्सीद सादनम् ।" महागणपतिं ध्यायामि, अस्मिन् बिंबे महागणपतिमावाहयामि ॥

महागणपतये नमः आसनं समर्पयामि । पाद्यं समर्पयामि । अर्घ्यं समर्पयामि । आचमनीयं समर्पयामि । स्नानं समर्पयामि । स्नानानन्तरं आचमनीयं समर्पयामि । वस्त्राणि समर्पयामि । यज्ञोपवीतं समर्पयामि । गन्धान् धारयामि । गन्धोपरि अक्षतान् समर्पयामि । पुष्पैः पूजयामि ।

ओं सुमुखाय नमः । एकदन्ताय । कपिलाय । गजकर्णकाय । लंबोदराय । विकटाय । विघ्नराजाय । गणाधिपाय । धूमकेतवे । गणाध्यक्षाय । फालचन्द्राय । गजाननाय । वक्रतुण्डाय । शूर्पकर्णाय । हेरम्बाय । स्कन्दपूर्वजाय । महागणाधिपतये नमः । नानाविधपत्रपुष्पाणि समर्पयामि ॥

धूपमाघ्रापयामि । दीपं दर्शयामि । धूपदीपानन्तरं आचमनीयं समर्पयामि । ओं भूर्भुवस्सुवः । तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् । देव सवितः प्रसुव । सत्यं

त्वर्तेन परिषिञ्चामि। अमृतोपस्तरणमसि ओं प्राणाय स्वाहा, ओं अपानाय स्वाहा, ओं व्यानाय स्वाहा, ओं उदानाय स्वाहा, ओं समानाय स्वाहा, ओं ब्रह्मणे स्वाहा, ब्रह्मणि म आत्माऽमृतत्वाय । महागणपतये नमः.......निवेदयामि महागणपतये नमः मध्ये मध्ये पानीयं समर्पयामि। महागणपतये नमः तांबूलं समर्पयामि । महागणपतये नमः नीराजनं समर्पयामि।

वक्रतुण्ड महाकाय सूर्यकोटिसमप्रभ।
अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥

महागणपतये नमः मन्त्रपुष्पं समर्पयामि । महागणपतये नमः प्रदक्षिण नमस्कारान् समर्पयामि । सर्वोपचार पूजास्समर्पयामि ॥

मन्त्रहीनं क्रियाहीनं भक्तिहीनं गणाधिप।
पूजितं यन्मया देव परिपूर्णं तदस्तु ते।
अनया पूजया श्रीमहागणपतिः प्रीयताम् ॥

सङ्कल्पः— ममोपात्त समस्त दुरित क्षयद्वारा श्रीपरमेश्वर प्रीत्यर्थं, शुभे शोभने मुहूर्ते अद्य ब्रह्मणः द्वितीयपरार्धे श्वेतवराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलौ युगे प्रथमे पादे जंबूद्वीपे भारतवर्षे भरतखण्डे मेरोर्द[illegible] पार्श्वे शकाब्दे अस्मिन् वर्तमाने व्यावहारिके प्रभवादिषष्टिसंवत्सराणां मध्ये*..... नाम संवत्सरे....... अयने.....ऋतौ..... मासे...... पक्षे.....वासरयुक्तायां.....नक्षत्रयुक्तायां शुभयोग शुभकरणैवंगुण विशेषण विशिष्टायां अस्यां......शुभतिथौ अस्माकं सकुडुम्वानां श्रीवल्लीदेवसेनासमेतश्रीसुब्रह्मण्यप्रसाद

सिद्ध्यर्थं, तत्प्रसादेन श्रीवल्लीदेवसेना समेत श्रीसुब्रह्मण्येश्वर मुद्दिश्य यावच्छक्यं ध्यानावाहनादि षोडशोपचार पूजां करिष्ये ।। अप उपस्पृश्य, विघ्नेश्वर मुद्वास्य ।।

प्राणप्रतिष्ठा— ॐ अस्य श्रीवल्लीदेवसेनासमेत श्रीसुब्रह्मण्येश्वर प्राण प्रतिष्ठा महामन्त्रस्य - ब्रह्म विष्णु महेश्वरा ऋषयः। ऋग्यजुस्सामाथर्वाणि छन्दांसि। प्राणशक्तिः परा देवता। ह्रां बीजम्। ह्रीं शक्तिः। ह्रूं कीलकम्। श्रीवल्लीदेवसेनासमेत श्रीसुब्रह्मण्येश्वर प्राणप्रतिष्ठार्थे जपे विनियोगः ।। करन्यासः। ह्रां अङ्गुष्ठाभ्यां नमः। ह्रीं तर्जनीभ्यां नमः। ह्रूं मध्यमाभ्यां नमः। ह्रैं अनामिकाभ्यां नमः। ह्रौं कनिष्ठिकाभ्यां नमः। ह्रः करतलकरपृष्ठाभ्यां नमः। एवं हृदयादिन्यासः। भूर्भुवस्स्वरोमिति दिग्बन्धः। ध्यानम्-

रक्तांभोधिस्थपोतोल्लसदरुण सरोजाधिरूढा कराब्जैः
पाशं कोदण्डमिक्षूद्भव मळिगुणमप्यङ्कुशं पञ्चबाणान्।
विभ्राणाऽसृक्कपालं त्रिनयन लसिता पीनवक्षोरुहाढ्या
देवी बालार्कवर्णा भवतु सुखकरी प्राणशक्तिः परा नः ।।

ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं ह्रौं हंसः सोहं सोहं हंसः अस्य प्राणाः मम प्राणाः श्रीवल्लीदेवसेनासमेत श्रीसुब्रह्मण्येश्वरजीवो मम जीवः वाङ्मनश्चक्षुः श्रोत्र जिह्वा घ्राण प्राणापानव्यानोदानसमानैः सह इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा।

मन्त्रः— असुनीते पुनरस्मासु चक्षुः पुनः प्राणमिह नो धेहि भोगम्। ज्योक्पश्येम सूर्यमुच्चरन्तमनुमते मृडया नस्स्वस्ति। अमृतं वै प्राणाः अमृतमापः प्राणानेव यथास्थानमुपह्वयते ।।

स्वामिन् सर्वजगन्नाथ यावत्पूजावसानकम् ।
तावत्त्वं प्रीतिभावेन बिंबेऽस्मिन् सन्निधिं कुरु ॥

आवाहितो भव। स्थापितो भव। सन्निहितो भव। सन्निरुद्धो भव। अवकुण्ठितो भव। सुप्रसन्नो भव। वरदो भव। स्वामिन् प्रसीद प्रसीद ॥

मन्त्रः— आ त्वा वहन्तु हरयस्सचेतसः श्वेतैरश्वैस्सह केतुमद्भिः। वाता जितै र्बलवद्भिर्मनोजवैरायाहि शीघ्रं मम हव्याय शर्वोम् ॥ इति जपित्वा अक्षतान् पुष्पाणि च देवतोपरि प्रक्षिपेत् ॥ प्राणप्रतिष्ठान्ते किञ्चिन्निवेदनं कुर्यात् ॥

पीठपूजा- गुं गुरुभ्यो नमः । गं गणपतये नमः । आधारशक्त्यै नमः । मूलप्रकृत्यै नमः । आदिकूर्माय नमः । अनन्ताय नमः। पृथिव्यै नमः। श्वेतछत्राय नमः। सितचामराभ्यां नमः । धर्मकन्दाय नमः । ज्ञाननाळाय नमः । वैराग्यकर्णिकाय नमः। ऐश्वर्य पत्राय नमः। योगपीठपद्माय नमः ॥

पीठ शक्तिपूजा— वामायै नमः । ज्येष्ठायै नमः । श्रेष्ठायै नमः । रौद्र्यै नमः । काळ्यै नमः । कलविकरण्यै नमः । बलविकरण्यै नमः । बलायै नमः । बलप्रमथिन्यै नमः । सर्वभूतदमन्यै नमः । मनोन्मन्यै नमः । ओं नमो भगवते सकल गुणात्मशक्तियुक्ताय अनन्ताय महायोगपीठात्मने नमः ॥

शंखपूजा— शंखाधारं प्रक्षाळ्य । शंखाधाराय नमः इति आधारं निक्षिप्य। शंखं प्रक्षाळ्य आधारे विन्यस्य। पाञ्चजन्याय नमः । पर्जन्याय नमः । धवळाय नमः । सुस्वनाय नमः । इत्यक्षतादिभिः शंखमभ्यर्च्य। जलेन शंखमापूर्य हस्तेन संस्पृश्य

शंखं चन्द्रार्कदैवत्यं मध्ये वरुणदैवतम्।
पृष्ठे प्रजापतिं विद्यादग्रे गङ्गां सरस्वतीम्॥

शङ्खमूले स्थितो ब्रह्मा शङ्खमध्ये सरस्वती।
शङ्खाग्रे सर्वतीर्थानि तस्माच्छङ्खं प्रपूजये॥

सुब्रह्मण्यमूलमन्त्रं अष्टवारं जपित्वा बिंबं पूजाद्रव्याणि आत्मानं च शङ्खतीर्थेन प्रोक्ष्य। गायत्र्या पुनश्शङ्खं पूरयित्वा मूलेन देवतामावाह्य समस्तोपचारान् समर्पयामि इति पूजयेत्।

## सुब्रह्मण्यपूजाक्रमः ॥

सुब्रह्मण्यमजं शान्तं कुमारं करुणालयम्।
किरीटहारकेयूरमणिकुण्डलमण्डितम्॥ १॥

षण्मुखं द्वादशभुजं शूलाद्यायुधधारिणम्।
स्मितवक्त्रं प्रसन्नाभं स्तूयमानं सदा बुधैः॥ २॥

वल्लीदेवीप्राणनाथं वाञ्छितार्थप्रदायकम्।
सिंहासने सुखासीनं सूर्यकोटिसमप्रभम्।
देवं वन्दे सदा भक्त्या स्वान्तः करणनिर्मलः॥ ३॥

श्रीवल्लीदेवसेनासमेतं श्रीसुब्रह्मण्यं ध्यायामि।

आवाहयामि विश्वेशं स्कन्दं सर्वगुणाकरम्।
सर्वदुष्कृतिविध्वंसं साक्षाद्रुद्रस्वरूपिणम्॥ ४॥

श्रीवल्लीदेवसेनासमेतं श्रीसुब्रह्मण्येश्वरं आवाहयामि।

सुवर्णवज्रमाणिक्यपुष्यरागादिसुन्दरम्।
तुभ्यं सिंहासनं दास्ये प्रसीद मम सर्वदा॥ ५॥

श्रीवल्लीदेवसेनासमेत श्रीसुब्रह्मण्येश्वराय नमः -
रत्न खचित सिंहासनं समर्पयामि॥

भक्तमन्दारपादाब्ज संसारार्णवतारक।
पाद्यं गृहाण वरद पापारण्याशुशुक्षणे॥ ६॥

श्रीवल्ली+राय नमः पाद्यं समर्पयामि॥

कर्पूरागरुकस्तूरीसुपुष्पैर्मिश्रितोदकम्।
अर्घ्यं गृहाण देवेश करुणावरुणालय॥ ७॥

श्रीवल्ली+राय नमः अर्घ्यं समर्पयामि॥

तुङ्गभद्रा कृष्णवेणी कावेरी च पिनाकिनी।
तासां पानीयमानीय ददाम्याचमनीयकम्॥ ८॥

श्रीवल्ली+राय नमः आचमनीयं समर्पयामि॥

गीर्वाणानीकिनीनाथ प्रणतार्तिप्रभञ्जन।
मधुपर्कं गृहाणेदं पाहि मां करुणानिधे॥ ९॥

श्रीवल्ली+राय नमः मधुपर्कं समर्पयामि।

शर्करामधुगोक्षीरफलसारघृतैर्युतम्।
पञ्चामृतस्नानमिदं बाहुलेय गृहाण भो॥ १०॥

श्रीवल्ली+राय नमः पञ्चामृतस्नानं समर्पयामि॥

(पञ्चामृतमेलन मन्त्राः- (१) पयः= *(பால்)* — ''आप्यायस्व समेतु ते विश्वतः सोम वृष्णियम्। भवा वाजस्य सङ्गथे।'' (२) दधि = *(தயிர்)* —''दधिक्राव्ण्णो अकारिषं जिष्णोरश्वस्य वाजिनः। सुरभि नो मुखा करत् प्रण आयूँषि तारिषत्।'' (३) आज्यम् = *(நெய்)* — ''शुक्रमसि ज्योतिरसि तेजोसि देवो वस्सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोस्सूर्यस्य रश्मिभिः।'' (४) मधु = *(தேன்)* — ''मधु वाता ऋतायते मधु

क्षरन्ति सिन्धवः । माध्वीर्नस्सन्त्वोषधीः ।'' (५) शर्करा= (சர்க்கரை) —''स्वादुः पवस्व दिव्याय जिन्वने स्वादुरिन्द्राय सुहवे तु नाम्ने । स्वादुर्मित्राया वरुणाय वायवे बृहस्पतये मधुमाँ अदाभ्यः ।'' )

फलोदकं = (பழச்சாறு)—''याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः । बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वँहसः ।''

श्रीवल्ली+रं फलोदकेन स्नपयामि ।।

गङ्गादिपुण्यतीर्थेभ्यः समाहृत्य सुवासितम् ।
शुद्धोदकस्नानमिदं गृहाण शिखिवाहन ।।

मन्त्रः— आपोहिष्ठा मयो भुवः । ता न ऊर्जे दधातन । महे रणाय चक्षसे । यो वश्शिवतमो रसः । तस्य भाजयतेह नः । उशतीरिव मातरः । तस्मा अरं गमाम वः । यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ।।

श्रीवल्ली+राय नमः शुद्धोदकस्नानं समर्पयामि ।।

एलालवङ्गकस्तूरीकर्पूरादिसुवासितैः ।
तीर्थैराचम्यतां देव गङ्गाधरसुताव्यय ।।

श्रीवल्ली+राय नमः, आचमनीयं समर्पयामि ।

मन्त्रः— ''अभिवस्त्रा सुवसनान्यर्षाभि धेनोस्सुदुघाः पूयमानाः । अभिचन्द्रा भर्तवे नो हिरण्योऽभ्यश्वान् रथिनो देव सोम ।।''

दुकूलवस्त्रयुगळं मुक्ताजालसमन्वितम् ।
प्रतिगृह्णीष्व गाङ्गेय भक्तापङ्कञ्जनक्षम ।।
श्रीवल्ली+राय नमः वस्त्रयुग्मं समर्पयामि ।।

मन्त्रः— ''यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तादायुष्यमग्रियं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥''

राजतं ब्रह्मसूत्रञ्च काञ्चनञ्चोत्तरीयकम्।
सुब्रह्मण्य महाभाग गृहाण सुरनायक॥
श्रीवल्ली+राय नमः यज्ञोपवीतं समर्पयामि॥

नित्याग्निहोत्रसंभूतं विरजाहोमपावितम्।
गृहाण भस्म हे स्वामिन् भक्तानां भूतिदायक॥
श्रीवल्ली+राय नमः धारणार्थं भस्म समर्पयामि॥

मन्त्रः— ''गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्वभूतानां त्वामिहोपह्वये श्रियम्॥''

कस्तूरीकुङ्कुमाद्यैश्च वासितं सहिमोदकम्।
गन्धं विलेपनार्थाय गृहाण क्रौञ्चदारण॥
श्रीवल्ली+राय नमः गन्धान् धारयामि॥

अक्षता धवळा दिव्याश्शालीयास्तण्डुलाश्शुभाः।
काञ्चनाक्षतसंयुक्ता गृह्यन्तां शंभुनन्दन॥
श्रीवल्ली+राय नमः अक्षतान् समर्पयामि॥
पुन्नागवकुळाशोकनीपपाटलिजानि च।
वासन्तिकाबिल्वजाजीपुष्पाणि स्वीकुरु प्रभो॥
श्रीवल्ली+गय नमः नानाविध पुष्पाणि समर्पयामि॥

अङ्गपूजा ॥ सुरवन्दितपादाय नमः-पादौ पूजयामि । मुकुराकारजानवे नमः- जानुनी पूजयामि। करिराजकरोरवे नमः- ऊरू पूजयामि। रत्नकिंकिणिकायुक्तकटये नमः- कटिं पूजयामिरं। गुहाय नमः- गुह्यं पूजयामि । हेरंबसहोदराय नमः- उदरं

पूजयामि। सुनाभये नमः- नाभिं पूजयामि। सुहृदे नमः- हृदयं पूजयामि। विशालवक्षसे नमः- वक्षः पूजयामि। कृत्तिकास्तनन्धयाय नमः- स्तनौ पूजयामि। शत्रुजयोर्जितबाहवे नमः- बाहून् पूजयामि। शक्तिहस्ताय नमः- हस्तान् पूजयामि। पुष्करस्रजे नमः - कंठान् पूजयामि। षण्मुखाय नमः- मुखानि पूजयामि। सुनासाय नमः - नासिकाः पूजयामि। द्विषण्णेत्राय नमः। नेत्राणि पूजयामि- हिरण्यकुण्डलाय नमः - कर्णान् पूजयामि। फालनेत्रसुताय नमः- फालानि पूजयामि। वेदशिरोवेद्याय नमः- शिरांसि पूजयामि सेनापतये नमः- सर्वाण्यङ्गानि पूजयामि। (अष्टोत्तरशतनामार्चनं अष्टोत्तर सहस्रनामार्चनं वल्लीदेवसेनयोरप्यष्टोत्तरशतनामार्चने कुर्यात्॥)

मन्त्रः— धूरसि धूर्व धूर्वन्तं तं योऽस्मान् धूर्वति तं धूर्व यं वयं धूर्वामः॥''

दशाङ्गं गुग्गुलूपेतं सुगंधि सुमनोहरम्।
कपिलाघृतसंयुक्तं धूपं गृह्णीष्व षण्मुख॥

श्रीवल्ली+राय नमः धूपमाघ्रापयामि॥

मन्त्रः— ''उद्दीप्यस्व जातवेदोऽपघ्नन्निर्ऋतिं मम। पशूँश्च मह्यमावह जीवनञ्च दिशो दिश। मा नो हिँसीज्जातवेदो गामश्वं पुरुषं जगत्। अबिभ्रदग्न आगहि श्रिया मा परिपातय॥''

साज्यं त्रिवर्तिसंयुक्तं वह्निना योजितं मया।
दीपं गृहाण स्कन्द त्वं त्रैलोक्यतिमिरापहम्॥

श्रीवल्ली+राय नमः दीपं सन्दर्शयामि॥

मन्त्रः— ओं भूर्भुवस्सुवः। तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्। देव सवितः प्रसुव। सत्यं त्वर्तेन

परिषिञ्चामि । अमृतोपस्तरणमसि । ओं प्राणाय स्वाहा। अपानाय स्वाहा। व्याना य स्वाहा। उदानाय स्वाहा। समानाय स्वाहा। ब्रह्मणे स्वाहा। मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः। माध्वीर्नस्सन्त्वोषधीः। मधु नक्तमुतोषसि मधुमत्पार्थिवँ रजः। मधु द्यौरस्तु नः पिता। मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः। माध्वीर्गावो भवन्तु नः। मधु मधु मधु। अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठञ्च समाश्रितः। ईशस्सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक्॥

लेह्यं चोष्यञ्च भोज्यञ्च पानीयं षड्रसान्वितम्।
भक्ष्यशाकादिसंयुक्तं नैवेद्यं स्कन्द गृह्यताम्॥

श्रीवल्ली+राय नमः........महानैवेद्यं निवेदयामि॥

पानीयं पावनं श्रेष्ठं गङ्गादिसरिदाहृतम्।
दाहोपशमनार्थं त्वं संगृहाण षडानन॥

श्रीवल्ली+राय नमः मध्ये मध्ये पानीयं समर्पयामि॥

हस्तप्रक्षाळनं समर्पयामि। पादप्रक्षाळनं समर्पयामि। शुद्धाचमनीयं समर्पयामि॥

पूगीफलसमायुक्तं नागवल्लीदळैर्युतम्।
कर्पूरचूर्णसंयुक्तं तांबूलं प्रतिगृह्यताम्॥

श्रीवल्ली+राय नमः ताम्बूलं समर्पयामि॥

मन्त्रः— सोमो वा एतस्य राज्यमादत्ते। यो राजा सन्राज्यो वा सोमेन यजते। देवसुवामेतानि हवींषि भवन्ति। एतावन्तो वै देवानाँ सवाः। त एवास्मै सवान् प्रयच्छन्ति। त एनं पुनस्सुवन्ते राज्याय। देवसू राजा भवति॥

देवसेनापते स्कन्द संसारध्वान्तभास्कर।
नीराजनमिदं देव गृह्यतां सुरसत्तम॥
श्रीवल्ली+राय नमः नीराजनं समर्पयामि॥

मन्त्रः— योऽपां पुष्पं वेद। पुष्पवान् प्रजावान् पशुमान् भवति। चन्द्रमा वा अपां पुष्पम्। पुष्पवान् प्रजावान् पशुमान् भवति॥

पुष्पाञ्जलिं प्रदास्यामि भक्ताभीष्टप्रदायक।
गृहाण वल्लीरमण सुप्रीतेनान्तरात्मना॥
श्रीवल्ली+राय नमः मन्त्रपुष्पं समर्पयामि॥

यानि कानि च पापानि जन्मान्तरकृतानि च।
तानि तानि विनश्यन्ति प्रदक्षिण पदे पदे॥

षडाननं कुङ्कुमरक्तवर्णं द्विषड्भुजं बालकमंबिकासुतम्।
रुद्रस्य सूनुं सुरसैन्यनाथं गुहं सदाहं शरणं प्रपद्ये॥

उमाकोमळहस्ताब्ज संभावितललाटकम्।
हिरण्यकुण्डलं वन्दे कुमारं पुष्करस्रजम्॥
श्रीवल्ली+राय नमः प्रदक्षिण नमस्कारान् समर्पयामि॥

छत्रं समर्पयामि। चामरं समर्पयामि। दर्पणं दर्शयामि। गीतं श्रावयामि। नृत्यं कारयामि। आन्दोळिकामारोपयामि। अश्वमारोपयामि। गजमारोपयामि। समस्तराजोपचार देवोप चारान् समर्पयामि॥

अर्घ्यदानविधिः— सङ्कल्पः— अद्यपूर्वोक्तैवं-गुणविशेषण विशिष्टायामस्यां........ शुभतिथौ श्रीवल्लीदेवसेनासमेत श्रीसुब्रह्मण्येश्वर प्रीत्यर्थं मया आचरितस्य

सुब्रह्मण्यपूजनस्य संपूर्णफलावाप्त्यर्थं अर्घ्यप्रदानं करिष्ये ।
पात्रस्थ शर्करामिश्रित क्षीरोदकैः साक्षतांजलिरर्घ्यं दद्यात् ॥

श्रीगमद्वल्लीसमायुक्त देवसेनामनोहर ।
करुणारससंपूर्ण प्रसन्नार्घ्यं प्रगृह्यताम् ॥
श्रीवल्ली...राय नमः इदमर्घ्यम्, इदमर्घ्यम्, इदमर्घ्यम् ॥

कार्तिकेय महाबाहो कामितार्थप्रदायक ।
भक्तपालन देवेश प्रसन्नार्घ्यं प्रगृह्यताम् ॥

श्रीवल्ली.....राय नमः इदमर्घ्यम्, इदमर्घ्यम्, इदमर्घ्यम् ॥

परब्रह्म सदानन्द पापारण्यदवानल ।
सुब्रह्मण्य सुखानन्द प्रसन्नार्घ्यं प्रगृह्यताम् ॥
श्रीवल्ली....राज इदमर्घ्यम्, इदमर्घ्यम्, इदमर्घ्यम् ॥

नीलकण्ठ महाभाग सुब्रह्मण्यस्य वाहन ।
इदमर्घ्यं प्रदास्यामि सुप्रीतो भव सर्वदा ॥
मयूराय नमः इदमर्घ्यम्, इदमर्घ्यम्, इदमर्घ्यम् ॥

अनेनार्घ्यप्रदानेन सुब्रह्मण्यस्सुप्रीतस्सुप्रसन्नो वरदो भवतु ।

पुत्रं देहि यशो देहि संपदं देहि शाश्वतीम् ।
त्वयि भक्तिश्च मे देहि परत्र च परां गतिम् ॥

आदित्यविष्णुविघ्नेशरुद्रब्रह्ममरुद्गणाः ।
लोकपालास्सर्वदेवाश्चराचरमिदं जगत् ।
सर्वं त्वमेव ब्रह्मैवमजमक्षरमद्वयम् ।
अप्रमेयं महाशान्तमचलं निर्विकारकम् ।
निरालंबं निराभासं सत्तामात्रस्वरूपकम् ।
एवं त्वां मेधया बुद्ध्या सदा पश्यन्ति सूरयः ॥

न पश्यन्ति सदा मूढाः सदा दुर्गतिहेतुतः ।
विष्ण्वादीनि स्वरूपाणि लीलालोकविडंबनम्।
कर्तुमुद्यम्य रूपाणि विविधानि भवन्ति च ।
तत्तदुक्ताः कथास्सम्यङ् नित्यसद्गत्यवाप्तये ।
भक्त्या श्रुत्वा पठित्वा च दृष्ट्वा संपूज्य भक्तितः ।

सर्वान्कामानवाप्नोति भवदाराधनात्खलु।
मम पूजां संप्रगृह्य सुप्रसन्नो भवानघ ॥

चपलं मन्मथवशममर्यादमसूयकम् ।
वञ्चकं दुः खजनकं पापिष्ठं पाहि मां प्रभो ॥

इति प्रार्थयेत् ॥

*—*—*

## ३. श्रीसुब्रह्मण्यनामावल्यः

### सुब्रह्मण्यषोडशनामस्तोत्रम् (१)

सेनानीरग्निभूः स्कन्दस्तारकारिर्गुणप्रियः ।
षाण्मातुरो बाहुलेयः कृत्तिकाप्रियपुत्रकः ॥ १ ॥

मयूरवाहनः श्रीमान् कुमारः क्रौञ्चदारणः ।
विशाखः पार्वतीपुत्रः सुब्रह्मण्यो गुहस्तथा ॥ २ ॥

षोडशैतानि नामानि शृणुयात् श्रावयेत्सदा ।
तस्य भक्तिश्च मुक्तिश्च करस्थे नैव संशयः ॥ ३ ॥

## नामावलिः

सेनान्ये नमः । अग्निभुवे । स्कन्दाय । तारकारये । गुणप्रियाय । षाण्मातुराय । बाहुलेयाय । कृत्तिकाप्रियपुत्रकाय । मयूरवाहनाय । श्रीमते । कुमाराय । क्रौञ्चदारणाय । विशाखाय । पार्वतीपुत्राय । सुब्रह्मण्याय । गुहाय नमः । (१६)

## सुब्रह्मण्यषोडशनामस्तोत्रम् (२)

ध्यानम्-

षड्वक्त्रं शिखिवाहनं त्रिनयनं चित्रांबरालंकृतं
शक्तिं वज्रमसिं त्रिशूलमभयं खेटं धनुश्चक्रकम् ।
पाशं कुक्कुटमङ्कुशं च वरदं दोर्भिर्दधानं सदा
ध्यायामीप्सितसिद्धिदं शिवसुतं स्कन्दं सुराराधितम् ॥

प्रथमो ज्ञानशक्त्यात्मा द्वितीयः स्कन्द एव च ।
अग्निगर्भस्तृतीयस्तु बाहुलेयश्चतुर्थकः ॥ १ ॥

गाङ्गेयः पञ्चमः प्रोक्तः षष्ठः शरवणोद्भवः ।
सप्तमः कार्तिकेयश्च कुमारश्चाष्टमस्तथा ॥ २ ॥

नवमः षण्मुखः प्रोक्तो दशमस्तारकान्तकः ।
एकादशश्च सेनानीः गुहो द्वादश एव च ॥ ३ ॥

त्रयोदशो ब्रह्मचारी शिवतेजाश्चतुर्दशः ।
क्रौञ्चदारी पञ्चदशः षोडशः शिखिवाहनः ॥ ४ ॥

षोडशैतानि नामानि यः पठेद्भक्तिसंयुतः ।
बृहस्पतिसमो वाचि ब्रह्मतेजोयुतो भवेत् ।
यद्यत्प्रार्थयते मर्त्यस्तत्सर्वं लभते ध्रुवम् ॥ ५ ॥

## षोडशनामावलिः

ज्ञानशक्त्यात्मने नमः । स्कन्दाय । अग्निगर्भाय । बाहुलेयाय । गाङ्गेयाय । शरवणोद्भवाय । कार्तिकेयाय । कुमाराय । षण्मुखाय । तारकान्तकाय । सेनान्ये । गुहाय । ब्रह्मचारिणे । शिवतेजसे । क्रौञ्चदारिणे । शिखिवाहनाय नमः ॥ (१६)

## प्रज्ञाविवर्धनं कार्तिकेयस्तोत्रम्

स्कन्द उवाच—

योगीश्वरो महासेनः कार्तिकेयोऽग्निनन्दनः ।
स्कन्दः कुमारः सेनानीः स्वामी शङ्करसंभवः ॥ १ ॥

गाङ्गेयस्ताम्रचूडश्च ब्रह्मचारी शिखिध्वजः ।
तारकारिरुमापुत्रः क्रौञ्चारिश्च षडाननः ॥ २ ॥

शब्दब्रह्मसमुद्रश्च सिद्धः सारस्वतो गुहः ।
सनत्कुमारो भगवान् भोगमोक्षफलप्रदः ॥ ३ ।

शरजन्मा गणाधीशपूर्वजो मुक्तिमार्गकृत् ।
सर्वागमप्रणेता च वाञ्छितार्थ प्रदर्शनः ॥ ४ ॥

अष्टाविंशतिनामानि मदीयानीति यः पठेत् ।
प्रत्यूषे श्रद्धया युक्तो मूको वाचस्पतिर्भवेत् ॥ ५ ॥

महामन्त्रमयानीति मम नामानुकीर्तनम् ।
महाप्रज्ञामवाप्नोति नात्र कार्या विचारणा ॥ ६

(रुद्रयामलतः)

## नामावलिः

ओं योगीश्वराय नमः । महासेनाय । कार्तिकेयाय । अग्निनन्दनाय । स्कन्दाय। कुमाराय । सेनान्ये । स्वामिने । शङ्करसंभवाय । गाङ्गेयाय । ताम्रचूडाय। ब्रह्मचारिणे । शिखिध्वजाय। तारकारये। उमापुत्राय। क्रौञ्चारये। षडाननाय। शब्दब्रह्मसमुद्राय। सिद्धाय। सारस्वताय। गुहाय । सनत्कुमाराय भगवते। भोगमोक्षफलप्रदाय। शरजन्मने। गणाधीशपूर्वजाय। मुक्तिमार्गकृते। सर्वागमप्रणेत्रे। वाञ्छितार्थप्रदर्शनाय नमः ।। २८

## श्रीगुहषोडशनामस्तोत्रम्

ज्ञानशक्तिधरः स्कन्दः देवसेनापतिस्तथा।
सुब्रह्मण्यो गजारूढः शरकाननसंभवः ।। १ ।।

कार्तिकेयः कुमारश्च षण्मुखस्तारकान्तकः ।
सेनानीर्ब्रह्मशास्ता च वल्लीकल्याण सुन्दरः ।। २ ।।

बालश्च क्रौञ्चभेत्ता च शिखिवाहन एव च।
एतानि स्वामिनामानि षोडश प्रत्यहं नरः ।
यः पठे त्सर्वपापेभ्यः स मुच्येत महामुने ।। ३ ।।

## नामावलिः

ज्ञानशक्तिधराय नमः । स्कन्दाय । देवसेनापतये । सुब्रह्मण्याय । गजारूढाय। शरकाननसंभवाय । कार्तिकेयाय । कुमाराय । षण्मुखाय । तारकान्तकाय । सेनान्ये । ब्रह्मशास्त्रे । वल्लीकल्याण सुन्दराय । बालाय । क्रौञ्चभेत्त्रे । शिखिवाहनाय नमः । (१६)

## सुब्रह्मण्यसप्तविंशतिनामावलिः ।

### श्रीसुब्रह्मण्यध्यानम् ।

षड्वक्त्रं शिखिवाहनं त्रिणयनं चित्रांबरालंकृतं
शक्तिं वज्रमसिं त्रिशूलमभयं खेटं धनुश्चक्रकम्।
पाशं कुक्कुटमंकुशं च वरदं दोर्भिर्दधानं सदा
ध्यायामीप्सित सिद्धिदं शिवसुतं स्कन्दं सुराराधितम्।

स्कन्दाय नमः । षण्मुखाय । सेनान्ये । मयूर वाहनाय । अग्निभुवे । गुहाय। बाहुलेयाय । तारक जिते । विशाखाय । द्वादशभुजाय । क्रौश्चभेदिने । कार्तिकेयाय। अमरपतये । ज्ञानशक्तये । सौम्यभुवे । गांगेयाय । शरोद्भूताय । ब्रह्मचारिणे । शिवदेहाय । देवसेनापतये । षाण्मातुराय । सुरश्रेष्ठाय । सुब्रह्मण्याय । वज्रधराय। वल्लीकान्ताय । कुमाराय । कुक्कुटध्वजाय नमः। (२७)

## सुब्रह्मण्य-एकपञ्चाशन्नामावलिः ।

### (अकारादिक्षकारान्तानि)

ओं अमरेशाय नमः । आराध्याय। इन्द्रपूजिताय। ईश्वराय। उमासूनवे । ऊर्ध्वरेतसे । ऋषिप्रियाय । ॠणोद्धर्त्रे । ऌवन्द्याय । ॡहन्त्रे । एकनायकाय । ऐश्वर्यप्रदाय । ओजस्विने । औत्पत्तये । अंबिकासुताय। अःक्षीण तेजसे। कमण्डलुधराय। खड्गहस्ताय। गांगेयाय। घण्टा पाणिने नमः २०

ङप्रियाय नमः । चन्द्रचूडाय । छन्दोमयाय । जगद्भुवे । झषकेतुजिते । ज्ञानमूर्तये । टङ्कहस्ताय । ठप्रियाय । डंबराय ।

ढक्काप्रियाय । णगम्याय। तत्त्वरूपाय । स्थविष्ठकाय । दण्डपाणिने। धनुष्पाणिने । नगरन्ध्रकराय । पद्महस्ताय। फणिभुग्वाहनाय। बहुलासुताय। भवात्मजाय नमः। ४०

महासेनाय नमः। यज्ञमूर्तये। रमणीयाय। लंबोदरानुजाय। वचद्भुवे। शरसंभवाय। षण्मुखाय। सर्वलोकेशाय। हरात्मजाय। ळक्षप्रियाय। क्षमाक्षेत्राय नमः। ५१

## श्रीसुब्रह्मण्यसिद्धनामाष्टोत्तरशतनामावलिः-१

(आत्मानन्दनाथ प्रणीतः)

ॐ ह्रीं सुब्रह्मण्याय नमः । ज्ञानशक्तये । अचिन्त्याय । दहरालयाय । चिच्छिवाय । चिद्धनाय । चिदाकारमहाद्वीप-मध्यदेशसदालयाय। चिदब्धिमथनोत्पन्नचित्सारमणिमण्डलाय। चिदानन्दमहासिन्धुमध्यरत्नशिखामणये । विज्ञानकोशविल-सदानन्दामृतमण्डलाय। वाचामगोचरानन्तशुद्धचैतन्य-विग्रहाय। मूलकन्दस्थचिद्देशमहाताण्डवपण्डिताय। षट्कोण-मार्गविलसत्परमण्डलमण्डिताय । द्वादशारमहापद्मस्थितचिद्-व्योमभासुराय । त्रिकोणाख्यमहापीठस्थितचिद्बिन्दुनायकाय । बिन्दुमण्डलमध्यस्थचिद्विलासप्रकाशकाय। षट्कोणमन्दिरो-द्भासिमध्यस्तम्भाशिरोमणये । प्रथमाक्षरनिर्दिष्टपरमार्थार्थ-विग्रहाय। अकारादिक्षकारान्तमातृकाक्षर संगताय । अकाराख्यप्रकाशात्ममहालक्ष्यार्थविग्रहाय। (२०)

हकाराख्यविमर्शात्ममहालक्ष्यार्थविग्रहाय नमः । ग्रन्थि-त्रयमहाभेदचतुराय। सद्गुरवे। हृदयाम्बुजमध्यस्थविरजव्योम-नायकाय। शान्ताद्रिनिलयाय। अखण्डाकारकज्ञानलक्षणाय। सजातीयविजातीयस्वगतभेदरहिताय । ब्रह्मविद्यास्वरूपहै-

मवतीतनूजाय । चिदग्निसंभूताय । भूमानन्दपरिपूर्णाचलविराजिताय। महावाक्योपदेष्ट्रे। शिवगुरवे। मूलाधारमुखोत्पन्नब्रह्मरन्ध्रचिदालयाय। मध्यनाडीमहामार्गस्थितमण्डलमध्यगाय। हंसमार्गैकनिरतज्ञानमण्डलचिद्रसाय। सदोदितमहाप्रज्ञाकाराय। सहस्रारकमलान्तस्थबिन्दुकूटमहागुरवे । स्वात्मन्यारोपितसमस्तजगदाधाराय । सर्वाधिष्ठानचिन्मात्रस्थानमध्यविराजिताय। सर्वोपनिषदुद्घुष्टमहाकीर्तिधराय। (४०)

स्वसाम्राज्यसुखासीनस्वयंज्योतिःस्वरूपाय नमः । कार्यसहितमायाविध्वंसकाय । सर्ववेदान्तसिद्धान्तमहासाम्राज्यदीक्षिताय । सालम्बननिरालम्बवृत्तिमध्यस्थरूपकाय । मोक्षलक्ष्मीप्रदात्रे । शुद्धचैतन्यकान्तारसिद्धाय । भानुकूटप्रतीकाशचित्पर्वतशिखामणये । भावाभावकलातीतशून्यग्राममहेश्वराय । कल्पितपञ्चकृत्याधिपतये । ब्रह्मविद्यामयग्रामचिदालयमहाप्रभवे । प्रत्यग्भूतमहामौनगोचराय । शुद्धचिद्रसाय। हृदयग्रन्थिभेदविद्याविशारदाय। कामाद्यरिषड्वर्गनाशकाय। सर्वज्ञत्वादिगुणमूर्तीकृतषडाननाय। कर्मब्रह्मस्वरूपवेदविलसितचरणाय। अत्यन्तनिर्मलाकारचैतन्यगिरिमध्यगाय। अद्वैतपरमानन्दचिद्विलासमहानिधये । मण्डलत्रयभासकाय । अनेककोटिब्रह्माण्डधारिणे नमः। (६०)

सर्वात्मकाय नमः । तत्वमस्यादिमहावाक्यलक्ष्यार्थस्वरूपाय । अविमुक्तमहापीठस्थितचिद्रूपविग्रहाय । अमितानन्दबोधान्तनादान्तस्थितमण्डलाय । अखण्डशुद्धचैतन्यस्वरूपाय । लोकालोककलैकमत्यपरमार्थस्वरूपाय । आदिमध्यान्तरहितब्रह्मानन्दनिधये । आधारमार्गसीमान्तवासिने।

निस्तरङ्गसुखार्णवाय । अवाङ्मनसगोचराय । नित्यशुद्धबुद्धमुक्तसत्यस्वरूपाय । चिद्दीपमङ्गलज्योतिःस्वरूपाय । षट्चक्रनगरविभवेश्वराय । सकललोकैकनेत्रे । निष्प्रपञ्चाय । निराधाराय । सकलाधारस्वरूपाय । भक्तमानसरञ्जकाय । बाह्यानुविद्धसमाधिनिष्ठात्मगोचरवृत्तिस्वरूपदेवसेनासमेताय । आन्तरानुविद्धसमाधिनिष्ठात्मगोचरवृत्तिस्वरूपवल्लीपतये नमः । (८०)

अनाहतमहाचक्रस्थिताय नमः । अवस्थात्रयसाक्षिणे । सहस्रकोटितपनसंकाशाय । संसारमायादुःखौघभेषजाय । शुद्धचित्तस्वरूपमयूराधिष्ठानाय । चराचरस्थूलसूक्ष्मकल्पकाय । ब्रह्मादिकीटपर्यन्तव्यापकाय । समस्तलोकगीर्वाणशरण्याय । सनकादिसमायुक्तप्रज्ञानघनविग्रहाय । अनन्तवेदवेदान्तसंवेद्याय । धर्मार्थकामकैवल्यदायकाय । सकलवेदसारप्रणवलक्ष्यार्थनिजस्वरूपाय । अप्राकृतमहादिव्यपुरुषाय । अज्ञानतिमिरध्वान्तभास्कराय । अव्ययानन्दविज्ञानसुखदाय । अचिन्त्यदिव्यमहिमारञ्जिताय । परानन्दस्वरूपार्थबोधकाय । षडम्बुरुहचक्रान्तःस्फूर्तिसौदामिनीप्रभाय । षड्विधैक्यानुसंधानपरहृद्व्योमसंस्थिताय । निस्त्रैगुण्यमहामार्गगामिने नमः । (१००)

नित्यपूर्णचिदाकाशस्थितचिन्मण्डलाय नमः । कार्यकारणनिर्मुक्ताय । नादबिन्दुकलातीताय । शिवाब्धिमथनोत्पन्नानन्दपीयूषविग्रहाय । परिपूर्णपरानन्दप्रज्ञानघनलक्षणाय । अखण्डैकरसस्फूर्तिप्रवाहाश्रयाय । नामरूपविवर्जिताय । श्रीपरब्रह्मणे । (१०८)

# सुब्रह्मण्याष्टोत्तरशतनामावलिः-२

ओं सुब्रह्मण्याय नमः। परब्रह्मणे। शरणागतवत्सलाय। भक्तप्रियाय। परस्मै ज्योतिषे। कार्तिकेयाय। महामतये। कृपानिधये। महासेनाय। भीमाय। भीमपराक्रमाय। पार्वतीनन्दनाय। श्रीमते। ईशपुत्राय। महाद्युतये। एकरूपाय। स्वयं ज्योतिषे। अप्रमेयाय। जितेन्द्रियाय। सेनापतये नमः। (२०)

महाविष्णवे नमः। आद्यन्तरहिताय। शिवाय। अग्निगर्भाय। महादेवाय। तारकासुरमर्दनाय। अनादये। भगवते। देवाय। शरजन्मने। षडाननाय। गुहाशयाय। महातेजसे। लोकज्ञाय। लोकरक्षकाय। सुन्दराय। सूत्रकाराय। विशाखाय। परभञ्जनाय। ईशाय नमः ॥ (४०)

खड्गधराय नमः। कर्त्रे। विश्वरूपाय। धनुर्धराय। ज्ञानगम्याय। दृढप्रज्ञाय। कुमाराय। कमलासनाय। अकल्मषाय। शक्तिधराय। सुकीर्तये। दीनरक्षकाय। षाण्मातुराय। सर्वगोप्त्रे। सर्वभूतदयानिधये। विश्वप्रियाय। विश्वेशाय। विश्वभुजे। विश्वमङ्गलाय। सर्वव्यापिने नमः। (६०)

सर्वभोक्त्रे नमः। सर्वरक्षाकराय। प्रभवे। कारणत्रयकर्त्रे। निर्गुणाय। क्रौञ्चदारणाय। सर्वभूताय। भक्तिगम्याय। भक्तेशाय। भक्तवत्सलाय। कल्पवृक्षाय। गह्वराय। सर्वभूताशयस्थिताय। देवगोप्त्रे। दुःखज्ञाय। वरदाय। वरप्रियाय। अनादिब्रह्मचारिणे। सहस्राक्षाय। सहस्रपदे नमः ॥ ८०

ज्ञानस्वरूपाय नमः। ज्ञानिने। ज्ञानदात्रे। सदाशिवाय। वेदान्तवेद्याय। वेदात्मने। वेदसाराय। विचक्षणाय। योगिने।

योगप्रियाय। अनन्ताय। महारूपाय। बहुरूपाय। निर्विकल्पाय। निर्लेपाय। निर्विकाराय। निरञ्जनाय। नित्यतृप्ताय। निराहाराय। निराभासाय नमः ॥ १००

निराश्रयाय नमः । अखण्डनिर्मलाय । अनन्ताय । चिदानन्दात्मकाय । गुहाय । चिन्मयाय । गिरीशाय । दण्डायुधधराय नमः ॥ १०८

## सुब्रह्मण्याष्टोत्तरशतनामावलिः - ३

स्कन्दाय नमः । गुहाय । षण्मुखाय । फालनेत्रसुताय । प्रभवे । पिङ्गलाय । कृत्तिकासूनवे। शिखिवाहनाय। द्विषड्भुजाय। द्विषण्णेत्राय। शक्तिधराय। पिशिताश-प्रभंजनाय। तारकासुर-संहाराय। रक्षोबल-विमर्दनाय। मत्ताय। प्रमत्ताय। उन्मत्ताय। सुरसैन्य-सुरक्षकाय। देवसेनापतये। प्राज्ञाय नमः। (२०)

कृपालवे नमः। भक्तवत्सलाय। उमासुताय। शक्तिधराय। कुमाराय। क्रौञ्चदारणाय। सेनान्ये। अग्निजन्मने। विशाखाय। शंकरात्मजाय । शिवस्वामिने। गणस्वामिने । सर्वस्वामिने । सनातनाय। अनन्तशक्तये। अक्षोभ्याय। पार्वतीप्रिय-नन्दनाय। गङ्गासुताय। शरोद्भूताय। आहूताय नमः। (४०)

पावकात्मजाय नमः। जृम्भाय। प्रजृम्भाय। उज्जृम्भाय। कमलासन-संस्तुताय । एकवर्णाय । द्विवर्णाय । त्रिवर्णाय । सुमनोहराय। चतुर्वर्णाय। पञ्चवर्णाय। प्रजापतये। अहस्पतये। अग्निगर्भाय । शमीगर्भाय। विश्वरेतसे। सुरारिघ्ने। हरिद्वर्णाय। शुभकराय। वटवे नमः। (६०)

पटुवेषभृते नमः। पूष्णे। गभस्तये। गहनाय। चन्द्रवर्णाय। कलाधराय। मायाधराय । महामायिने । कैवल्याय ।

शंकरात्मजाय। विश्वयोनये । अमेयात्मने। तेजोनिधये । अनामयाय। परमेष्ठिने। परब्रह्मणे। वेदगर्भाय। विराट्सुताय। पुलिन्दकन्याभर्त्रे। महासारस्वतावृताय नमः। (८०)

आश्रिताखिलदात्रे नमः । चोरघ्नाय । रोगनाशनाय । अनन्तमूर्तये। आनन्दाय। शिखण्डिने। कृतकेतनाय। डम्भाय। परमडम्भाय । महाडम्भाय । वृषाकपये । कारणोपात्तदेहाय । कारणातीतविग्रहाय । अनीश्वराय । अमृताय । प्राणाय । प्राणायामपरायणाय। विरुद्धहन्त्रे। वीरघ्नाय। रक्तश्याम-गलाय नमः। (१००)

सुब्रह्मण्याय नमः । गुहाय । प्रीताय । ब्रह्मण्याय । ब्राह्मणप्रियाय । वंशवृद्धिकराय । वेदवेद्याय । अक्षयफलप्रदाय नमः ।। (१०८)

## षडक्षराष्टोत्तरशतनामस्तोत्रम्   ४.

शरण्यः शर्वतनयः शर्वाणीप्रियनन्दनः।
शरकाननसंभूतः शर्वरीशमुखः शमः ।। १ ।।

शङ्करः शरणत्राता शशाङ्कमुकुटोज्ज्वलः।
शर्मदः शंखकण्ठश्च शरकार्मुकहेतिभृत्।। २ ।।

शक्तिधारी शक्तिकरः शतकोट्यर्कपाटल :।
शमदः शतरुद्रस्थः शतमन्मथविग्रहः ।। ३ ।।

रणाग्रणी रक्षणकृद्रक्षोबलविमर्दनः।
रहस्यज्ञो रतिकरो रक्तचन्दनलेपनः ।। ४ ।।

रत्नधारी रत्नभूषो रत्नकुण्डलमण्डितः।
रक्तांबरो रम्यमुखो रविचन्द्राग्निलोचनः ।। ५ ।।

रमाकलत्रजामाता रहस्यो रघुपूजितः ।
रसकोणान्त रालस्थो रजोमूर्ती रतिप्रदः ॥ ६ ॥

वसुदो वटुरूपश्च वसन्तऋतुपूजितः ।
वलवैरिसुतानाथो वनजाक्षो वराकृतिः ॥ ७ ॥

वक्रतुण्डानुजो वत्सो वरदाभयहस्तकः ।
वत्सलो वर्षकारश्च वसिष्ठादिप्रपूजितः ॥ ८ ॥

वणिग्रूपो वरेण्यश्च वर्णाश्रमविधायकः ।
वरदो वज्रभृद्वन्द्यो वन्दारुजनवत्सलः ॥ ९ ॥

नकाररूपो नलिनो नकारयुतमन्त्रकः ।
नकारवर्णनिलयो नन्दनो नन्दिवन्दितः ॥ १० ॥

नटेशपुत्रो नम्रभ्रूर्नक्षत्र ग्रहनायकः ।
नगाग्रनिलयो नम्यो नमद्भक्तफलप्रदः ॥ ११ ॥

नवनागो नगहरो नवग्रहसुवन्दितः ।
नववीराग्रजो नव्यो नमस्कारस्तुतिप्रियः ॥ १२ ॥

भद्रप्रदश्च भगवान् भवारण्यदवानलः ।
भवोद्भवो भद्रमूर्तिर्भर्त्सितासुरमण्डलः ॥ १३ ॥

भयापहो भर्गरूपो भक्ताभीष्टफलप्रदः ।
भक्तिगम्यो भक्तनिधिर्भयक्लेश विमोचनः ॥ १४ ॥

भरतागमसुप्रीतो भक्तो भक्तार्तिभञ्जनः ।
भयकृद्भरताराध्यो भरद्वाजऋषिस्तुतः ॥ १५ ॥

वरुणो वरुणाराध्यो वलाराति मुखस्तुतः ।
वज्रशक्त्यायुधोपेतो वरो वक्षःस्थलोज्ज्वलः ॥ १६ ॥

वस्तुरूपो वशिध्येयो वलित्रय विराजितः ।
वक्रालको वलयधृत् वलत्पीताम्बरोज्ज्वलः ॥ १७ ॥

वचोरूपो वचनदो वचोऽतीतचरित्रकः ।
वरदो वश्यफलदो वल्लीदेवीमनोहरः ॥ १८ ॥

## षडक्षराष्टोत्तरशतनामावलिः-४

शरण्याय नमः । शर्वतनयाय । शर्वाणीप्रियनन्दनाय । शरकाननसंभूताय । शर्वरीशमुखाय । शमाय । शङ्कराय । शरणत्रात्रे । शशाङ्क मुकुटोज्ज्वलाय । शर्मदाय । शङ्खकण्ठाय । शरकार्मुक हेतिभृते । शक्तिधारिणे । शक्तिकराय । शतकोट्यर्क-पाटलाय । शमदाय । शतरुद्रस्थाय । शतमन्मथविग्रहाय । रणाग्रण्ये । रक्षणकृते नमः । (२०)

रक्षोबलविमर्दनाय नमः । रहस्यज्ञाय । रतिकराय । रक्तचन्दनलेपनाय । रत्नधारिणे । रत्नभूषाय । रत्नकुण्डल-मण्डिताय । रक्तांबराय । रम्यमुखाय । रविचन्द्राग्निलोचनाय । रमाकलत्रजामात्रे । रहस्याय । रघुपूजिताय । रसकोणान्तराल-स्थाय । रजोमूर्तये । रतिप्रदाय । वसुदाय । वटुरूपाय । वसन्तऋतुपूजिताय । वलवैरिसुतानाथाय नमः । (४०)

वनजाक्षाय । वराकृतये । वक्रतुण्डानुजाय । वत्साय । वरदाभयहस्तकाय । वत्सलाय । वर्षकाराय । वसिष्ठादि-प्रपूजिताय । वणिग्रूपाय । वरेण्याय । वर्णाश्रमविधायकाय । वरदाय । वज्रभृद्वन्द्याय । वन्दारुजनवत्सलाय । नकाररूपाय । नलिनाय । नकारयुतमन्त्रकाय । नकारवर्णनिलयाय । नन्दनाय । नन्दिवन्दिताय नमः ॥ (६०)

नटेशपुत्राय नमः । नम्रभ्रुवे । नक्षत्रग्रहनायकाय । नगाग्रनिलयाय । नम्याय। नमद्भक्तफलप्रदाय । नवनागाय । नगहराय । नवग्रहसुवन्दिताय । नववीराग्रजाय। नव्याय । नमस्कारस्तुतिप्रियाय। भद्रप्रदाय। भगवते। भवारण्यदवानलाय। भवोद्भवाय । भद्रमूर्तये । भर्त्सितासुरमण्डलाय । भयापहाय । भर्गरूपाय नमः ॥ ८०

भक्ताभीष्टफलप्रदाय नमः । भक्तिगम्याय । भक्तनिधये । भयक्लेशविमोचनाय । भरतागमसुप्रीताय । भक्ताय । भक्तार्तिभञ्जनाय । भयकृते । भरताराध्याय । भरद्वाजऋषिस्तुताय। वरुणाय । वरुणाराध्याय । वलारातिमुखस्तुताय । वज्रशक्त्यायुधोपेताय । वराय । वक्षःस्थलोज्ज्वलाय। वस्तुरूपाय। वशिध्येयाय। वलित्रयविराजिताय। वक्रालकाय नमः ॥ १००

वलयधृते नमः । वलत्पीताम्बरोज्ज्वलाय । वचोरूपाय । वचनदाय । वचोऽतीतचरित्रकाय । वरदाय । वश्यफलदाय । वल्लीदेवी मनोहराय नमः ॥ १०८

## देवसेनाऽष्टोत्तरशतनामावलिः

पीतामुत्पल धारिणीं शशिनिभां[1] दिव्याम्बरा[2]लङ्कृतां
वामे लम्बकरां महेन्द्रतनयां मन्दारमालान्विताम्[3] ।
देवैरर्चितपाद पद्मयुगलां स्कन्दस्य वामे स्थितां
दिव्यां दिव्यविभूषणां त्रिनयनां देवीं त्रिभङ्गीं भजे ॥

1. शचिसुतां 2. पीतांबरा 3. धराम्

देवसेनायै नमः । पीतांबरायै । उत्पलधारिण्यै । ज्वालिन्यै । ज्वलनरूपायै । ज्वालानेत्रायै[1] । ज्वलत्केशायै । महावीर्यायै । महाबलायै । महाभोगायै । महेश्वर्यै । महापूज्यायै । महोन्नतायै । माहेन्द्र्यै । इन्द्राण्यै । इन्द्रपूजितायै । ब्रह्माण्यै । ब्रह्मजनन्यै । ब्रह्मरूपायै । ब्रह्मानन्दायै नमः ॥ २० ॥

ब्रह्मपूजितायै नमः । ब्रह्मसृष्टायै । वैष्णव्यै । विष्णुरूपायै । विष्णुपूज्यायै । दिव्यसुन्दर्यै । दिव्यानन्दायै । दिव्यपङ्कजधारिण्यै । दिव्याभरणभूषितायै । दिव्यचन्दनलेपितायै । मुक्ताहारवक्षःस्थलायै । वामे लम्बकरायै । महेन्द्रतनयायै । मातङ्गकन्यायै । मातङ्गलब्धायै । अचिन्त्यशक्त्यै । अचलायै । अक्षरायै । अष्टैश्वर्यसंपन्नायै । अष्टमङ्गलायै नमः । (४०)

चन्द्रवर्णायै नमः । कलाधरायै । अंबुजवदनायै । अंबुजाक्ष्यै । असुरमर्दनायै । इष्टसिद्धि प्रदायै । शिष्टपूजितायै । पद्मवासिन्यै । परात्परायै । परमेश्वर्यै । परस्यै निष्ठायै । परमानन्दायै । परमकल्याण्यै । पापविनाशिन्यै । लोकाध्यक्षायै । लज्जाढ्यायै । लयंकर्यै । लयवर्जितायै । ललनारूपायै । सुराध्यक्षायै नमः । (६०)

धर्माध्यक्षायै नमः । दुःस्वप्ननाशिन्यै । दुष्टनिग्रहायै । शिष्टपरिपालनायै । ऐश्वर्यदायै । ऐरावतवाहनायै । स्कन्दभार्यायै । सत्प्रभावायै । तुंगभद्रायै । वेदवासिन्यै । वेदगर्भायै । वेदानन्दायै । वेदस्वरूपायै । वेगवत्यै । प्रज्ञायै । प्रभावत्यै । प्रतिष्ठायै । प्रकटायै । प्राणेश्वर्यै । स्वधाकारायै नमः । (८०)

हैमभूषणायै नमः । हेमकुण्डलायै । हिमवद्गङ्गायै । हेमयज्ञोपवीतिन्यै । हेमाम्बरधरायै । परायै शक्त्यै । जागरिण्यै ।

1. ज्वलन्नेत्रायै

सदापूज्यायै । सत्यवादिन्यै । सत्यसन्धायै । सत्यलोकायै । अंबिकायै । विद्यांबिकायै । गजसुन्दर्यै । त्रिपुरसुन्दर्यै । मनोन्मन्यै । सुधानगर्यै । सुरेश्वर्यै । शूरसंहारिण्यै । विश्वतोमुख्यै नमः ॥ (१००)

दयारूपिण्यै नमः । देवलोकजनन्यै । गन्धर्वसेवितायै । सिद्धिज्ञानप्रदायिन्यै । शिवशक्तिस्वरूपायै । शरणागतरक्षणायै । देवसेनायै । परदेवतायै नमः । (१०८)

## वल्ल्यष्टोत्तरशतनामावलिः

श्यामां पङ्कजसंस्थि[1]तां मणिलसत्ताटङ्क कर्णोज्ज्वलां
सव्ये[2] लम्बकरां किरीटमकुटां तुङ्गस्तनोत्कञ्चुकाम् ।
वामे पङ्कजधारिणीं[3] शरवणोद्भूतस्य सव्ये
स्थितां गुञ्जामाल्यधरां प्रवालवद[4]नां वल्लीश्वरीं भावये ॥

महावल्ल्यै नमः । श्यामतनवे । सर्वाभरणभूषितायै । पीताम्बरधरायै । दिव्यांबुजधारिण्यै । दिव्यगन्धानुलिप्तायै । ब्राह्म्यै । कराल्यै । उज्ज्वलनेत्रायै । प्रलम्बताटंक्यै । महेन्द्रतनयानुगायै । शुभरूपायै । शुभाकरायै । शुभंकर्यै । सव्ये लम्बकरायै । मूलप्रकृत्यै । प्रत्यु(पु)ष्टायै । महेश्वर्यै । तुङ्गस्तन्यै । सुकञ्चुकायै नमः । (२०)

सुवेषाढ्यायै नमः । सद्गुणायै । गुञ्जामाल्यधरायै । वैष्णव्यै । मोहिन्यै । मोहनायै । स्तंभिन्यै । त्रिभङ्गिन्यै । प्रवालधरायै । मनोन्मन्यै । चामुण्डायै । चण्डिकायै । स्कन्दभार्यायै ।

1. धारिणीं 2. दक्षे 3. अन्योन्येक्षणसंयुतां 4. वसनां

स्कन्दप्रियायै। सुप्रसन्नायै । सुलोचनायै । ऐश्वर्यप्रदायिन्यै । मङ्गलप्रदायिन्यै। अष्टसिद्धिदायै। अष्टैश्वर्यप्रदायिन्यै नमः। (४०)

महामायायै नमः । मन्त्रयन्त्रतन्त्रा[1]त्मिकायै । महाकल्पायै। तेजोवत्यै। परमेष्ठिन्यै। गुहदेवतायै। कलाधरायै। ब्रह्माण्यै । बृहत्यै । द्विनेत्रायै । द्विभुजायै । सिद्धसेवितायै । अक्षरायै। अक्षररूपायै । अज्ञानदीपिकायै । अभीष्टसिद्धि-प्रदायिन्यै। साम्राज्यायै । साम्राज्यदायिन्यै । सद्यो जातायै । सुधासागरायै नमः ॥ ६०

काञ्चनायै नमः। काञ्चनप्रदायै। वनमालिन्यै। सुधासागर-मध्यस्थायै। हेमांबरधारिण्यै। हेमकञ्चुकभूषणायै। वनवासिन्यै। मल्लिकाकुसुमप्रियायै । मनोवेगायै । महालक्ष्म्यै । महादेव्यै । महालोकायै। सर्वाध्यक्षायै। सुराध्यक्षायै। सुन्दर्यै। सुवेषाढ्यायै। वरलक्ष्म्यै। विदुत्तमायै[2]। सरस्वत्यै। कुमार्यै नमः ॥ ८०

भद्रकाल्यै नमः। दुर्गमायै। दुर्गायै। ऐन्द्राण्यै[3]। साक्षिण्यै। साक्षिवर्जितायै। पुराण्यै। पुण्यकीर्त्यै। पुण्यरूपायै। पूर्णायै। पूर्णभोगिन्यै । पुष्कलायै । सर्वतोमुख्यै । परायै शक्त्यै । परायै निष्ठायै। मूलदीपिकायै। योगिन्यै। योगदायै। बिन्दुस्वरूपिण्यै। पापनाशिन्यै नमः ॥ १००

ईश्वर्यै नमः । लोकसाक्षिण्यै । घोषिण्यै । पद्मवासिन्यै । पद्माक्ष्यै । गुणत्रय[4]ायै । षट्कोणवृत्त[5]वासिन्यै । शरणागत रक्षणायै नमः ॥ १०८

---

1. महामन्त्रायै। महायन्त्रायै, महातन्त्रायै, 2. विमुक्तमायायै। 3. इन्द्राण्यै। 4. गुणत्रय रहितायै। 5. षट्कोणचक्र वासिन्यै।

# सुब्रह्मण्यत्रिशतीस्तोत्रम्

श्रीं सौं शरवणभवः शरच्चन्द्रायुतप्रभः ।
शशाङ्क शेखरसुतः शचीमाङ्गल्यरक्षकः ॥ १ ॥

शतायुष्यप्रदाता च शतकोटिरविप्रभः ।
शचीवल्लभसुप्रीतः शचीनायकपूजितः ॥ २ ॥

शचीनाथचतुर्वक्त्र देवदैत्याभिवन्दितः ।
शचीशार्तिहरश्चैव शंभुः शंभूपदेशकः ॥ ३ ॥

शङ्करः शङ्करप्रीतः शम्याककुसुमप्रियः ।
शङ्कुकर्णमहाकर्ण प्रमुखाद्यभिवन्दितः ॥ ४ ॥

शचीनाथसुताप्राणनायकः शक्तिपाणिमान् ।
शङ्खपाणिप्रियः शङ्खोपम षड्गलसुप्रभः ॥ ५ ॥

शङ्खघोषप्रियः शङ्खचक्रशूलादिकायुधः ।
शङ्खधाराभिषेकादिप्रियः शङ्करवल्लभः ॥ ६ ॥

शब्दब्रह्ममयश्चैव शब्दमूलान्तरात्मकः ।
शब्दप्रियः शब्दरूपः शब्दानन्दः शचीस्तुतः ॥ ७ ॥

शतकोटिप्रविस्तारयोजनायतमन्दिरः ।
शतकोटिरविप्रख्य रत्नसिंहासनान्वितः ॥ ८ ॥

शतकोटि महर्षीन्द्र सेवितोभयपार्श्वभूः ।
शतकोटिसुरस्त्रीणां नृत्तसङ्गीतकौतुकः ॥ ९ ॥

शतकोटीन्द्रदिक्पाल हस्तचामरसेवितः ।
शतकोट्यखिलाण्डादिमहाब्रह्माण्डनायकः ॥ १० ॥

शंखपाणि विधिभ्यां च पार्श्वयोरुपसेवितः ।
शंखपद्मनिधीनां च कोटिभिः परिसेवितः ॥ ११ ॥

शशाङ्कादित्यकोटीभिः सव्यदक्षिणसेवितः ।
शंखपालाद्यष्टनागकोटिभिः परिसेवितः ॥ १२ ॥

शशाङ्कारपतङ्गादिग्रहनक्षत्रसेवितः ।
शशिभास्कर भौमादिग्रह दोषार्तिभञ्जनः ॥ १३ ॥

शतपत्रद्वयकरः शतपत्रार्चनप्रियः ।
शतपत्रसमासीनः शतपत्रासनस्तुतः ॥ १४ ॥

शारीरब्रह्ममूलादि षडाधार निवासकः ।
शतपत्रसमुत्पन्न ब्रह्मगर्वविभेदनः ॥ १५ ॥

शशाङ्कार्धजटाजूटः शरणागतवत्सलः ।
रकाररूपो रमणो राजीवाक्षो रहोगतः ॥ १६ ॥

रतीशकोटिसौन्दर्यो रविकोट्युदयप्रभः ।
रागस्वरूपो रागघ्नो रक्ताब्जप्रिय एव च ॥ १७ ॥

राजराजेश्वरीपुत्रो राजेन्द्रविभवप्रदः ।
रत्नप्रभाकिरीटाग्रो रविचन्द्राग्निलोचनः ॥ १८ ॥

रत्नाङ्गदमहाबाहू रत्नताटङ्कभूषणः ।
रत्नकेयूरभूषाढ्यो रत्नहारविराजितः ॥ १९ ॥

रत्नकिङ्किणिकाञ्च्यादिबद्धसत्कटिशोभितः ।
रवसंयुक्तरत्नाभनूपुरांघ्रिसरोरुहः ॥ २० ॥

रत्नकङ्कणचूल्या(डा)दिसर्वाभरणभूषितः ।
रत्नसिंहासनासीनो रत्नशोभितमन्दिरः ॥ २१ ॥

राकेन्दुमुखषट्कश्च रमावाण्यादि पूजितः ।
राक्षसामरगन्धर्व कोटि कोट्यभिवन्दितः ॥ २२ ॥

रणरङ्गे महादैत्यसंग्रामजयकौतुकः ।
राक्षसानीक संहार कोपाविष्टायुधान्वितः ॥ २३ ॥

राक्षसाङ्ग समुत्पन्न रक्तपानप्रियायुधः ।
रवयुक्तधनुर्हस्तो रत्नकुक्कुटधारणः ॥ २४ ॥

रणरङ्गजयो रामास्तोत्रश्रवणकौतुकः ।
रंभाघृताचीविश्वाचीमेनकाद्यभिवन्दितः ॥ २५ ॥

रक्तपीतांबरधरो रक्तगन्धानुलेपनः ।
रक्तद्वादशपद्माक्षो रक्तमाल्यविभूषितः ॥ २६ ॥

रविप्रियो रावणेशस्तोत्र साममनोह(ध)रः ।
राज्यप्रदो रन्ध्रगुह्यो रतिवल्लभसुप्रियः ॥ २७ ॥

रणानुबन्धनिर्मुक्तो राक्षसानीकनाशकः[1] ।
राजीवसंभवद्वेषी राजीवासनपूजितः ॥ २८ ॥

रमणीयमहाचित्रमयूरारूढसुन्दरः ।
रमानाथस्तुतो रामो रकाराकर्षणक्रियः ॥ २९ ॥

वकाररूपो वरदो वज्रशक्त्यभयान्वितः ।
वामदेवादिसंपूज्यो वज्रपाणिमनोहरः ॥ ३० ॥

वाणीस्तुतो वासवेशो वल्लीकल्याणसुन्दरः ।
वल्लीवदनपद्मार्को वल्लीनेत्रोत्पलोडुपः ॥ ३१ ॥

वल्लीद्विनयनानन्दो वल्लीचित्ततटामृतम् ।
वल्लीकल्पलतावृक्षो वल्लीप्रियमनोहरः ॥ ३२ ॥

वल्लीकुमुदहास्येन्दुः वल्लीभाषित सुप्रियः ।
वल्लीमनोहृत्सौन्दर्यो वल्लीविद्युल्लताघनः ॥ ३३ ॥

*1.* राक्षसवृन्दवैरिकः,

वल्लीमङ्गलवेषाढ्यो वल्लीमुखवशङ्करः ।
वल्लीकुचगिरिद्वन्द्व कुङ्कुमाङ्कितवक्षकः ।। ३४ ।।

वल्लीशो वल्लभो वायुसारथिर्वरुणस्तुतः ।
वक्रतुण्डानुजो वत्सो वत्सलो वत्सरक्षकः ।। ३५ ।।

वत्सप्रियो वत्सनाथो वत्सवीरगणावृतः ।
वारणाननदैत्यघ्नो वातापिघ्नोपदेशकः ।। ३६ ।।

वर्णगात्रमयूरस्थो वर्णरूपो वरप्रभुः ।
वर्णस्थो वारणारूढो वज्रशक्त्यायुधप्रियः ।। ३७ ।।

वामाङ्गो वामनयनो वचद्भूर्वामनप्रियः ।
वरवेषधरो वामो वाचस्पतिसमर्चितः ।। ३८ ।।

वसिष्ठादिमुनिश्रेष्ठवन्दितो वन्दनप्रियः ।
वकारनृपदेवस्त्रीचोरभूतारिमोहनः ।। ३९ ।।

णकाररूपो नादान्तो नारदादिमुनिस्तुतः ।
णकारपीठमध्यस्थो नगभेदी नगेश्वरः ।। ४० ।।

णकारनादसन्तुष्टो नागाशनरथस्थितः ।
णकारजपसुप्रीतो नानावेषो नगप्रियः ।। ४१ ।।

णकारबिन्दुनिलयो नवग्रहसुरूपकः ।
णकारपठनान [illegible] न्दिकेश्वरवन्दितः ।। ४२ ।।

णकारघण्टानिनदो नारायणमनोहरः ।
णकारनादश्रवणो नलिनोद्भवशिक्षकः ।। ४३ ।।

णकारपङ्कजादित्यो नववीराधिनायकः ।
णकारपुष्प भ्रमरो नवरत्नविभूषणः ।। ४४ ।।

णकारानर्घशयनो नवशक्तिसमावृतः ।
णकारवृक्षकुसुमो नाट्यसङ्गीतसुप्रियः ॥ ४५ ॥

णकारबिन्दुनादज्ञो नयज्ञो नयनोद्भवः ।
णकारपर्वतेन्द्राग्र समुत्पन्न सुधारणिः ॥ ४६ ॥

णकारपेटकमणिः नागपर्वतमन्दिरः ।
णकारकरुणानन्दो नादात्मा नागभूषणः ॥ ४७ ॥

णकारकिङ्किणीभूषो नयनादृश्यदर्शनः ।
णकारवृषभावासो नामपारायणप्रियः ॥ ४८ ॥

णकारकमलारूढो नामानन्तसमन्वितः ।
णकारतुरगारूढो नवरत्नादिदायकः ॥ ४९ ॥

णकारमकुटज्वालामणिर्नवनिधिप्रदः ।
णकारमूलमन्त्रार्थो नवसिद्धादिपूजितः ॥ ५० ॥

णकारमूलनादान्तो णकारस्तंभनक्रियः ।
भकाररूपो भक्तार्थो भवो भर्गो भयापहः ॥ ५१ ॥

भक्तप्रियो भक्तवन्द्यो भगवान्भक्तवत्सलः ।
भक्तार्तिभञ्जनो भद्रो भक्तसौभाग्यदायकः ॥ ५२ ॥

भक्तमङ्गलदाता च भक्तकल्याणदर्शनः ।
भक्तदर्शनसन्तुष्टो भक्तसंघसुपूजितः ॥ ५३ ॥

भक्तस्तोत्रप्रियानन्दो भक्ताभीष्टप्रदायकः ।
भक्तसंपूर्णफलदो भक्तसाम्राज्यभोगदः ॥ ५४ ॥

भक्तसालोक्य सामीप्य रूपमोक्षवरप्रदः ।
भवौषधिर्भवघ्नश्च भवारण्यदवानलः ॥ ५५ ॥

भवान्धकारमार्ताण्डो भववैद्यो भवायुधम्।
भवशैलमहावज्रो भवसागरनाविकः ।। ५६ ।।

भवमृत्युभयध्वंसी भावनातीतविग्रहः ।
भयभूतपिशाचघ्नो भास्वरो भारतीप्रियः ।। ५७ ।।

भाषितध्वनिमूलान्तो भावाभावविवर्जितः ।
भानुकोपपितृध्वंसी भारतीशोपदेशकः ।। ५८ ।।

भार्गवीनायकश्रीमद्भागिनेयो भवोद्भवः ।
भारक्रौञ्चासुरद्वेषो भार्गवीनाथवल्लभः ।। ५९ ।।

भटवीरनमस्कृत्यो भटवीरसमावृतः ।
भटतारागणोड्वीशो भटवीरगणस्तुतः ।। ६० ।।

भागीरथेयो भाषार्थो भावनाशबरीप्रियः ।
भकारे कलिचोरारि भूताद्युच्चाटनोद्यतः ।। ६१ ।।

वकारसुकलासंस्थो वरिष्ठो वसुदायकः ।
वकारकुमुदेन्दुश्च वकाराब्धिसुधामयः ।। ६२ ।।

वकारामृतमाधुर्यो वकारामृतदायकः ।
दक्षे वज्राभीतियुतो वामे शक्तिवरान्वितः ।। ६३ ।।

वकारोदधिपूर्णेन्दुः वकारोदधिमौक्तिकम्।
वकारमेघसलिलो वासवात्मजरक्षकः ।। ६४ ।।

वकारफलसारज्ञो वकारकलशामृतम्।
वकारपङ्कजरसो(मधु)वसुर्वंशाविवर्धनः ।। ६५ ।।

वकारदिव्यकमलभ्रमरो वायुवन्दितः ।
वकारशशिसङ्काशो वज्रपाणिसुताप्रियः ।। ६६ ।।

वकारपुष्पसद्गन्धो वकारतटपङ्कजम् ।
वकारभ्रमरध्वानो वयस्तेजो बलप्रदः ॥ ६७ ॥

वकारवनितानाथो वश्याद्यष्टप्रियाप्रदः ।
वकारफलसत्कारो वकाराज्यहुताशनः ॥ ६८ ॥

वर्चस्वी वाङ्मनोऽतीतो वाताप्यरिकृतप्रियः ।
वकारवटमूलस्थो वकारजलधेस्तटः ॥ ६९ ॥

वकारगङ्गावेगाब्धिः वज्रमाणिक्यभूषणः ।
वातरोगहरो वाणीगीतश्रवण कौतुकः ॥ ७० ॥

वकारमकरारूढो वकारजलधेः पतिः ।
वकारामलमन्त्रार्थो वकारगृह मङ्गलम् ॥ ७१ ॥

वकारस्वर्गमाहेन्द्रो वकारारण्यवारणः ।
वकारपञ्जरशुको वलारितनयास्तुतः ॥ ७२ ॥

वकारमन्त्रमलयसानुमन्मन्दमारुतः ।
वाद्यन्तभान्त षट्क्रम्य जपान्ते शत्रुभञ्जनः ॥ ७३ ॥

वज्रहस्तसुतावल्लीवामदक्षिणसेवितः ।
वकुलोत्पलकादम्ब पुष्पदामस्वलङ्कृतः ॥ ७४ ॥

वज्रशक्त्यादिसंपन्न द्विषट्पाणि सरोरुहः ।
वासनागन्धलिप्ताङ्गो वषट्कारो वशीकरः ॥ ७५ ॥

वासनायुक्तताम्बूलपूरिताननसुन्दरः ।
वल्लभानाथसुप्रीतो वरपूर्णामृतोदधिः ॥ ७६ ॥

*—*—*

# सुब्रह्मण्यत्रिशतीनामावलिः

श्रीं सौं शरवणभवाय नमः । शरच्चन्द्रायुतप्रभाय । शशाङ्क शेखरसुताय । शचीमांगल्यरक्षकाय । शतायुष्यप्रदात्रे । शतकोटिरविप्रभाय । शचीवल्लभसुप्रीताय । शचीनायकपूजिताय । शचीनाथचतुर्वक्त्रदेवदैत्याभिवन्दिताय । शचीशार्तिहराय । शंभवे । शंभूपदेशकाय । शङ्कराय । शङ्करप्रीताय । शम्याककुसुमप्रियाय । शङ्कुकर्णमहाकर्ण प्रमुखाद्यभिवन्दिताय । शचीनाथसुता-प्राणनायकाय । शक्तिपाणिमते । शङ्खपाणिप्रियाय । शंखोपमषड्गलसुप्रभाय नमः ॥ (२०)

शंखघोषप्रियाय नमः । शंखचक्र शूलादिकायुधाय । शंखधाराभिषेकादिप्रियाय । शङ्करवल्लभाय । शब्दब्रह्ममयाय । शब्दमूलान्तरात्मकाय । शब्दप्रियाय । शब्दरूपाय । शब्दानन्दाय । शचीस्तुताय । शतकोटिप्रविस्तारयोजनायतमन्दिराय । शतकोटिरविप्रख्यरत्नसिंहासनान्विताय । शतकोटिमहर्षीन्द्र सेवितोभयपार्श्वभुवे । शतकोटिसुरस्त्रीणां नृत्तसंगीतकौतुकाय । शतकोटीन्द्रदिक्पाल हस्तचामरसेविताय । शतकोट्यखिलाण्डादि महाब्रह्माण्डनायकाय । शंखपाणिविधिभ्यां च पार्श्वयो रुपसेविताय । शंखपद्मनिधीनां च कोटिभिः परिसेविताय । शशाङ्कादित्यकोटीभिः सव्यदक्षिणसेविताय । शंखपालाद्यष्ट-नागकोटिभिः परिसेविताय नमः । (४०)

शशाङ्कारपतङ्गादिग्रहनक्षत्र सेविताय । शशिभास्कर-भौमादिग्रहदोषार्तिभञ्जनाय । शतपत्रद्वयकराय । शतपत्रार्चन-प्रियाय । शतपत्रसमासीनाय । शतपत्रासनस्तुताय ।

शरीरब्रह्ममूलादिषडाधारनिवासकाय । शतपत्रसमुत्पन्न-ब्रह्मगर्वविभेदनाय । शशाङ्कार्धजटाजूटाय । शरणागतवत्सलाय । रकाररूपाय । रमणाय । राजीवाक्षाय । रहोगताय । रतीशकोटिसौन्दर्याय । रविकोट्युदयप्रभाय । रागस्वरूपाय । रागघ्नाय । रक्ताब्जप्रियाय । राजराजेश्वरीपुत्राय नमः ।। (६०)

राजेन्द्रविभवप्रदाय । रत्नप्रभाकिरीटाग्राय । रविचन्द्राग्नि-लोचनाय । रत्नाङ्गदमहाबाहवे । रत्नताटङ्क भूषणाय । रत्नकेयूरभूषाढ्याय । रत्नहारविराजिताय । रत्नकिङ्किणिकाञ्च्यादि बद्धसत्कटिशोभिताय । रवसंयुक्तरत्नाभनूपुरांघ्रिसरोरुहाय । रत्नकङ्कणचूल्यादि (चूडादि) सर्वाभरण भूषिताय । रत्नसिंहासनासीनाय । रत्नशोभितमन्दिराय । राकेन्दुमुखषट्काय । रमावाण्यादिपूजिताय । राक्षसामरगन्धर्वकोटिकोट्यभि-वन्दिताय । रणरङ्गे महादैत्यसंग्रामजयकौतुकाय । राक्षसानीकसंहारकोपाविष्टायुधान्विताय । राक्षसाङ्ग समुत्पन्न रक्तपानप्रियायुधाय । रव युक्तधनुर्हस्ताय । रत्नकुक्कुट धारणाय नमः । (८०)

रणरङ्गजयाय नमः । रामास्तोत्रश्रवणकौतुकाय । रंभाघृताचीविश्वाचीमेनकाद्यभिवन्दिताय । रक्तपीतांबरधराय । रक्तगन्धानुलेपनाय । रक्तद्वादशपद्माक्षाय । रक्तमाल्यविभूषिताय । रविप्रियाय । रावणेशस्तोत्र साममनोह(ध)राय । राज्यप्रदाय । रन्ध्रगुह्याय । रतिवल्लभसुप्रियाय । रणानुबन्धनिर्मुक्ताय । राक्षसानीकनाशकाय । राजीवसंभवद्वेषिणे । राजीवासन पूजिताय । रमणीयमहाचित्र मयूरारूढसुन्दराय । रमानाथस्तुताय । रामाय । रकाराकर्षणक्रियाय नमः ।। (१००)

वकाररूपाय नमः । वरदाय । वज्रशक्त्यभयान्विताय । वामदेवादि संपूज्याय । वज्रपाणिमनोहराय । वाणीस्तुताय । वासवेशाय । वल्लीकल्याण सुन्दराय । वल्लीवदनपद्मार्काय । वल्लीनेत्रोत्पलोडुपाय। वल्लीद्विनयनानन्दाय। वल्लीचित्ततटामृताय। वल्लीकल्पलतावृक्षाय। वल्लीप्रियमनोहराय। वल्लीकुमुदहास्येन्दवे। वल्लीभाषितसुप्रियाय । वल्लीमनोहृत्सौन्दर्याय । वल्लीविद्युल्लताघनाय। वल्लीमङ्गलवेषाढ्याय। वल्लीमुखवशङ्कराय नमः ।। १२०

वल्लीकुचगिरिद्वन्द्व कुङ्कुमाङ्कितवक्षकाय नमः । वल्लीशाय । वल्लभाय । वायुसारथये । वरुणस्तुताय । वक्रतुण्डानुजाय । वत्साय । वत्सलाय । वत्सरक्षकाय । वत्सप्रियाय । वत्सनाथाय । वत्सवीरगणावृताय। वारणाननदैत्यघ्नाय। वातापिघ्नोपदेशकाय। वर्णगात्र मयूरस्थाय । वर्णरूपाय । वरप्रभवे । वर्णस्थाय । वारणारूढाय। वज्रशक्त्यायुधप्रियाय नमः ।। १४०

वामाङ्गाय नमः । वामनयनाय। वचद्भुवे। वामनप्रियाय। वरवेषधराय । वामाय । वाचस्पतिसमर्चिताय । वसिष्ठादिमुनिश्रेष्ठवन्दिताय। वन्दनप्रियाय। वकारनृपदेवस्त्री चोर भूतारिमोहनाय । णकाररूपाय । नादान्ताय । नारदादिमुनिस्तुताय। णकारपीठमध्यस्थाय । नगभेदिने । नगेश्वराय । णकारनाद सन्तुष्टाय । नागाशन रथस्थिताय । णकारजपसुप्रीताय। नानावेषाय नमः ।। (१६०)

नगप्रियाय नमः । णकारबिन्दुनिलयाय । नवग्रहसुरूपकाय। णकारपठनानन्दाय। नन्दिकेश्वरवन्दिताय। णकारघण्टानिनदाय। नारायण मनोहराय। णकारनादश्रवणाय। नलिनोद्भवशिक्षकाय । णकारपङ्कजादित्याय । नववीराधि-

नायकाय। णकारपुष्पभ्रमराय । नवरत्नविभूषणाय । णकारानर्घशयनाय। नवशक्तिसमावृताय। णकार वृक्षकुसुमाय। नाट्यसङ्गीत सुप्रियाय । णकारबिन्दुनादज्ञाय । नयज्ञाय । नयनोद्भवाय नमः ।। (१८०)

णकारपर्वतेन्द्राग्रसमुत्पन्नसुधारणये । णकारपेटकमणये । नागपर्वतमन्दिराय । णकारकरुणानन्दाय । नादात्मने । नागभूषणाय । णकारकिङ्किणीभूषाय । नयनादृश्यदर्शनाय । णकारवृषभावासाय। नामपारायणप्रियाय। णकारकमलारूढाय। नामानन्तसमन्विताय। णकारतुरगारूढाय। नवरत्नादिदायकाय। णकार मकुटज्वालामणये। नवनिधिप्रदाय। णकारमूलमन्त्रार्थाय। नवसिद्धादि पूजिताय । णकार मूलनादान्ताय । णकारस्तंभन क्रियाय नमः ।। २००

भकाररूपाय नमः । भक्तार्थाय । भवाय । भर्गाय । भयापहाय। भक्तप्रियाय। भक्तवन्द्याय। भगवते। भक्तवत्सलाय। भक्तार्तिभञ्जनाय । भद्राय । भक्तसौभाग्यदायकाय । भक्तमङ्गलदात्रे । भक्तकल्याण दर्शनाय । भक्तदर्शनसन्तुष्टाय । भक्तसंघसुपूजिताय । भक्तस्तोत्रप्रियानन्दाय । भक्ताभीष्ट प्रदायकाय। भक्तसंपूर्णफलदाय। भक्तसाम्राज्यभोगदाय।। २२०

भक्तसालोक्यसामीप्यरूपमोक्षवरप्रदाय । भवौषधये । भवघ्नाय । भवारण्यदवानलाय । भवान्धकारमार्ताण्डाय । भववैद्याय । भवायुधाय । भवशैलमहावज्राय । भवसागरनाविकाय। भवमृत्युभयध्वंसिने। भावनातीतविग्रहाय। भयभूतपिशाचघ्नाय । भास्वराय । भारतीप्रियाय । भाषितध्वनिमूलान्ताय । भावाभावविवर्जिताय ।

भानुकोपपितृध्वंसिने । भारतीशोपदेशकाय । भार्गवीनायकश्रीमद्भागिनेयाय। भवोद्भवाय नमः। २४०

भारक्रौञ्चासुरद्वेषाय नमः । भार्गवीनाथवल्लभाय । भटवीरनमस्कृत्याय । भटवीर समावृताय । भटतारागणोड्वीशाय। भटवीरगणस्तुताय । भागीरथेयाय । भाषार्थाय । भावना शबरीप्रियाय । भकारे कलिचोरारिभूताद्युच्चाटनोद्यताय । वकारसुकलासंस्थाय । वरिष्ठाय। वसुदायकाय । वकारकुमुदेन्दवे । वकाराब्धिसुधामयाय। वकारामृतमाधुर्याय । वकारामृतदायकाय। दक्षे वज्राभीतियुताय । वामे शक्तिवरान्विताय। वकारो दधिपूर्णेन्दवे नमः। (२६०)

वकारोदधिमौक्तिकाय । वकारमेघसलिलाय । वासवात्मजरक्षकाय। वकारफल सारज्ञाय। वकार कलशामृताय। वकारपङ्कजरसाय (मधुने)। वसवे। वंशविवर्धनाय। वकारदिव्य कमलभ्रमराय । वायुवन्दिताय । वकार शशिसङ्काशाय । वज्रपाणिसुताप्रियाय। वकारपुष्पसद्गन्धाय। वकारतटपङ्कजाय। वकार भ्रमरध्वानाय। वयस्तेजो बलप्रदाय। वकार वनितानाथाय। वश्याद्यष्टक्रियाप्रदाय। वकार फलसत्काराय। वकाराज्यहुताशनाय नमः ।। २८०

वर्चस्विने नमः। वाङ्मनोऽतीताय। वाताप्यरिकृतप्रियाय। वकारवटमूलस्थाय। वकारजलधेस्तटाय। वकारगङ्गावेगाब्धये। वज्रमाणिक्य भूषणाय । वातरोगहराय । वाणीगीत श्रवणकौतुकाय । वकारमकरारूढाय । वकारजलधेः पतये । वकारामल मन्त्रार्थाय। वकार गृहमङ्गलाय। वकारस्वर्गमाहेन्द्राय।

वकारारण्यवारणाय। वकारपञ्जरशुकाय। वलारितनयास्तुताय। वकारमन्त्रमलयसानुमन्मन्दमारुताय । वाद्यन्तभान्त षट्क्रम्य-जपान्ते शत्रुभञ्जनाय । वज्रहस्तसुतावल्लीवामदक्षिण सेविताय नमः । ३००

वकुलोत्पलकादम्ब पुष्पदामस्वलङ्कृताय । वज्रशक्त्यादि संपन्नद्विषट्पाणिसरोरुहाय । वासनागन्धलिप्ताङ्गाय । वषट्काराय । वशीकराय । वासनायुक्तताम्बूलपूरिताननसुन्दराय। वल्लभानाथसुप्रीताय। वरपूर्णामृतोदधये नमः ॥ ३०८

# सुब्रह्मण्यसहस्रनामस्तोत्रम् - १

## मार्कण्डेयकृतम्

अस्य श्री सुब्रह्मण्य सहस्रनामस्तोत्रमहामन्त्रस्य, मार्कण्डेय ऋषिः । अनुष्टुप्छन्दः । श्री सुब्रह्मण्यो देवता । शरजन्माऽक्षय इति बीजं, शक्तिधरोऽक्षय इति शक्तिः । कार्तिकेय इति कीलकम् । क्रौञ्चभेदीत्यर्गलम् । शिखिवाहन इति कवचम्, षण्मुख इति ध्यानम् । श्री सुब्रह्मण्य प्रसाद सिद्ध्यर्थे नाम पारायणे विनियोगः ।

करन्यासः- ओं शं ओङ्कारस्वरूपाय ओजोधराय ओजस्विने सुहृद्याय हृष्टचित्तात्मने भास्वद्रूपाय[1] अङ्गुष्ठाभ्यां नमः । ओं रं षट्कोण मध्यनिलयाय षट्किरीटधराय श्रीमते षडाधाराय षडाननाय ललाटषण्णेत्राय अभयवरदहस्ताय तर्जनीभ्यां नमः । ओं वं षण्मुखाय शरजन्मने शुभलक्षणाय शिखिवाहनाय षडक्षराय स्वामिनाथाय मध्यमाभ्यां नमः । ओं णं कृशानुसंभवाय कवचिने कुक्कुटध्वजाय शूरमर्दनाय कुमाराय

1. भास्वरूपाय,

सुब्रह्मण्याय[1] अनामिकाभ्यां नमः । ओं भं कन्दर्पकोटिदिव्यविग्रहाय द्विषड्बाहवे द्वादशाक्षाय मूलप्रकृतिरहिताय कनिष्ठिकाभ्यां नमः । ओं वं सच्चिदानन्दस्वरूपाय सर्वरूपात्मने खेटधराय खड्गिने शक्तिहस्ताय ब्रह्मैकरूपिणे करतलकरपृष्ठाभ्यां नमः ॥ एवं हृदयादिन्यासः । ओं भूर्भुवस्सु वरोमिति दिग्बन्धः । ध्यानम्-

ध्या[2]येत्षण्मुख मिन्दुकोटिसदृशं रत्नप्रभाशोभितं
बालार्क द्युति षट्किरीटविलसत्केयूर हारान्वितम्।
कर्णालंबित कुण्डल प्रविलद्गण्डस्थलैः शोभितं
काञ्ची कङ्कणकिङ्किणीरवयुतं शृङ्गारसारोदयम्॥
षड्वक्त्रं शिखिवाहनं त्रिणयनं चित्रांबरालङ्कृतं
वज्रं शक्तिमसिं त्रिशूलमभयं खेटं धनुश्चक्रकम्।
पाशं कुक्कुटमङ्कुशं च वरदं दोर्भिर्दधानं सदा
ध्यायामीप्सित सिद्धिदं शिवसुतं स्कन्दं सुराराधितम्॥
द्विषड्भुजं षण्मुखमंबिकासुतं कुमारमादित्य सहस्रतेजसम्।
वन्दे मयूरासनमग्निसंभवं सेनान्यमद्याहमभीष्टसिद्धये॥

*लमित्यादि पञ्चपूजा।*

सुब्रह्मण्यः सुरेशानः सुरारिकुलनाशनः।
ब्रह्मण्यो ब्रह्मविद् ब्रह्मा ब्रह्मविद्यागुरुर्गुरुः॥ १॥

ईशानगुरुरव्यक्तो व्यक्तरूपः सनातनः।
प्रधानपुरुषः कर्ता कर्म कार्यं च कारणम्॥ २॥

---

1. सुब्रह्मण्य, 2. वन्दे षण्मुख

अधिष्ठानं च विज्ञानं भोक्ता भोगश्च केवलः ।
अनादिनिधनः साक्षी नियन्ता नियमो यमः ॥ ३ ॥

वाक्पतिर्वाक्प्रदो वाग्मी वाच्यो वाग्वाचकस्तथा ।
पितामहगुरुर्लोकगुरुस्तत्वार्थबोधकः ॥ ४ ॥

प्रणवार्थोपदेष्टा चाप्यजो ब्रह्म सनातमः ।
वेदान्तवेद्यो वेदात्मा वेदादिर्वेदबोधकः ॥ ५ ॥

वेदान्तो वेदगुह्यश्च वेदशास्त्रार्थबोधकः ।
सर्वविद्यात्मकः शान्तश्चतुष्षष्टिकलागुरुः ॥ ६ ॥

मन्त्रार्थो मन्त्रमूर्तिश्च मन्त्रतन्त्रप्रवर्तकः ।
मन्त्री मन्त्रो मन्त्रबीजं महामन्त्रोपदेशकः ॥ ७ ॥

महोत्साहो महाशक्तिर्महाशक्तिधरः प्रभुः ।
जगत्स्रष्टा जगद्भर्ता जगन्मूर्तिर्जगन्मयः ॥ ८ ॥

जगदादिरनादिश्च जगद्बीजं जगद्गुरुः ।
ज्योतिर्मयः प्रशान्तात्मा सच्चिदानन्दविग्रहः ॥ ९ ॥

सुखमूर्तिः सुखकरः सुखी सुखकराकृतिः ।
ज्ञाता ज्ञेयो ज्ञानरूपो ज्ञप्तिर्ज्ञानफलं बुधः ॥ १० ॥

विष्णुर्जिष्णुर्ग्रसिष्णुश्च प्रभविष्णुः सहिष्णुकः ।
वर्धिष्णु र्भूष्णु रजरस्तितिक्ष्णुः क्षान्तिरार्जवम् ॥ ११ ॥

ऋजुः सुगम्यः सुलभो दुर्लभो लाभ ईप्सितः ।
विज्ञो विज्ञानभोक्ता च शिवज्ञानप्रदायकः ॥ १२ ॥

महदादिरहङ्कारो भूतादिर्भूतभावनः ।
भूतभव्य भविष्यच्च भूत भव्यभवत्प्रभुः ॥ १३ ॥

देवसेनापतिर्नेता कुमारो देवनायकः ।
तारकारिर्महावीर्यः सिंहवक्त्रशिरोहरः ॥ १४ ॥

अने ककोटिब्रह्माण्ड परिपूर्णासुरान्तकः ।
सुरानन्दकरः श्रीमानसुरादिभयङ्करः ॥ १५ ॥

असुरान्तः पुराक्रन्दकरभेरीनिनादनः ।
सुरवन्द्यो जनानन्दकरशिञ्जन्मणिध्वनिः ॥ १६ ॥

स्फुटाट्टहाससंक्षुभ्यत्तारकासुरमानसः ।
महाक्रोधो महोत्साहो महाबलपराक्रमः ॥ १७ ॥

महाबुद्धिर्महाबाहुर्महामायो महाधृतिः ।
रणभीमः शत्रुहरो धीरोदात्तगुणोत्तरः ॥ १८ ॥

महाधनुर्महाबाणो महादेवप्रियात्मजः ।
महाखड्गो महाखेटो महासत्वो महाद्युतिः ॥ १९ ॥

महर्धिश्च महामायी मयूरवरवाहनः ।
मयूरबर्हातपत्रो मयूरनटनप्रियः ॥ २० ॥

महानुभावोऽमेयात्माऽमेयश्रीश्च महाप्रभुः ।
सुगुणो दुर्गुणद्वेषी निर्गुणो निर्मलोऽमलः ॥ २१ ॥

सुबलो विमलः कान्तः कमलासन पूजितः ।
कालः कमलपत्राक्षः कलिकल्मषनाशनः ॥ २२ ॥

महारणो महायोद्धा महायुद्धप्रियोऽभयः ।
महारथो महाभागो भक्ताभीष्टफलप्रदः ॥ २३ ॥

भक्तप्रियः प्रियः प्रेम प्रेयान् प्रीतिधरः सखा ।
गौरीकरसरोजाग्र लालनीय मुखांबुजः ॥ २४ ॥

कृत्तिकास्तन्यपानैकव्यग्रषड्वदनांबुजः ।
चन्द्रचूडाङ्कभूभाग विहारणविशारदः ।। २५ ।।

ईशाननयनानन्दकन्दलावण्यनासिकः ।
चन्द्रचूडकरांभोज परिमृष्टभुजावलिः ।। २६ ।।

लंबोदर सहक्रीडा लंपटः शरसंभवः ।
अमराननालीक चकोरीपूर्णचन्द्रमाः ।। २७ ।।

सर्वाङ्ग सुन्दरः श्रीशः श्रीकरः श्रीप्रदः शिवः ।
वल्लीसखो वनचरो वक्ता वाचस्पतिर्वरः ।। २८ ।।

चन्द्रचूडो बर्हिपिञ्छ शेखरो मकुटोज्वलः ।
गुडाकेशः सुवृत्तोरुशिरा मन्दारशेखरः ।। २९ ।।

बिम्बाधरः कुन्ददन्तो जपाशोणाग्रलोचनः ।
षड्दर्शनीनटीरङ्गरसनो मधुरस्वनः ।। ३० ।।

मेघगंभीरनिर्घोषः प्रियवाक् प्रस्फुटाक्षरः ।
स्मितवक्त्रश्चोत्पलाक्षश्चारुगंभीरवीक्षणः ।। ३१ ।।

कर्णान्तदीर्घनयनः कर्णभूषण भूषितः ।
सुकुण्डलश्चारुगण्डः कंबुग्रीवो महाहनुः ।। ३२ ।।

पीनांसो गूढजत्रुश्च पीनवृत्तभुजावलिः ।
रक्ताङ्गो रत्नकेयूरो रत्नकंकणभूषितः ।। ३३ ।।

ज्याकिणाङ्क लसद्वामप्रकोष्ठवलयोज्वलः ।
रेखाङ्कुशध्वजच्छत्रपाणिपद्मो महायुधः ।। ३४ ।।

सुरलोक भयध्वान्त बालारुणकरोदयः ।
अङ्गुलीयकरत्नांशु द्विगुणोद्यन्नखाङ्कुरः ।। ३५ ।।

पीनवक्षा महाहारो नवरत्नविभूषणः ।
हिरण्यगर्भो हेमाङ्गो हिरण्यकवचो हरः ॥ ३६ ॥

हिरण्मय शिरस्त्राणो हिरण्याक्षो हिरण्यदः ।
हिरण्यनाभिस्त्रिवलि ललितोदरसुन्दरः ॥ ३७ ॥

सुवर्णसूत्रविलसद्विशङ्कटकटीतटः ।
पीतांबरधरो रत्नमेखलावृत मध्यकः ॥ ३८ ॥

पीवरालोमवृत्तोद्यत्सुजानु गुंप्तगुल्फकः ।
शङ्खचक्राब्जकुलिशध्वजरेखांघ्रिपङ्कजः ॥ ३९ ॥।

नवरत्नोज्वलत्पादकटकः परमायुधः ।
सुरेन्द्रमकुटप्रोद्यन्मणि रञ्जितपादुकः ॥ ४० ॥

पूज्यांघ्रिश्चारुनखरो देवसेव्यस्वपादुकः ।
पार्वतीपाणि कमलपरिमृष्टपदांबुजः ॥ ४१ ॥

मत्तमातङ्ग गमनो मान्यो मान्यगुणाकरः ।
क्रौञ्च दारणदक्षौजाः क्षणः क्षणविभागकृत् ॥ ४२ ॥

सुगमो दुर्गमो दुर्गो दुरारोहोऽरिदुः सहः ।
सुभगः सुमुखः सूर्यः सूर्यमण्डलमध्यगः ॥ ४३ ॥

स्वकिङ्करोपसंसृष्टसृष्टिसंरक्षिताखिलः ।
जगत्स्रष्टा जगद्भर्ता जगत्संहारकारकः ॥ ४४ ॥

स्थावरो जङ्गमो जेता विजयो विजयप्रदः ।
जयशीलो जितारातिर्जितमायो जितासुरः ॥ ४५ ॥

जितकामो जितक्रोधो जितमोहस्सुमोहनः ।
कामदः कामभृत्कामी कामरूपः कृतागमः ॥ ४६ ॥

कान्तः कल्यः कलिध्वंसी कल्हारकुसुमप्रियः ।
रामो रमयिता रम्यो रमणीजनवल्लभः ॥ ४७ ॥

रसज्ञो रसमूर्तिश्च रसो नवरसात्मकः ।
रसात्मा रसिकात्मा च रासक्रीडापरो रतिः ॥ ४८ ॥

सूर्यकोटिप्रतीकाशः सोमसूर्याग्निलोचनः ।
कलाभिज्ञः कलारूपी कलापी सकलप्रभुः ॥ ४९ ॥

बिन्दुर्नादः कलामूर्तिः कलातीतोऽक्षरात्मकः ।
मात्राकारः स्वराकारः एकमात्रो द्विमात्रकः ॥ ५० ॥

त्रिमात्रकश्चतुर्मात्रो व्यक्तः सन्ध्यक्षरात्मकः ।
व्यञ्जनात्मा वियुक्तात्मा संयुक्तात्मा स्वरात्मकः ॥ ५१ ॥

विसर्जनीयोऽनुस्वारः सर्ववर्णतनुर्महान् ।
अकारात्माऽप्युकारात्मा मकारात्मा त्रिवर्णकः ॥ ५२ ॥

ओङ्कारोऽथ वषट्कारः स्वाहाकारः स्वधाकृतिः ।
आहुतिर्हवनं हव्यं होताऽध्वर्युर्महाहविः ॥ ५३ ॥

ब्रह्मोद्गाता सदस्यश्च बर्हिरिध्मं समिच्चरुः ।
कव्यं पशुः पुरोडाशः आमिक्षा वाजवाजिनम् ॥ ५४ ॥

पवनः पावनः पूतः पवमानः पराकृतिः ।
पवित्रं परिधिः पूर्णपात्रमुद्भूतिरिन्धनम् ॥ ५५ ॥

विशोधनं पशुपतिः पशुपाशविमोचकः ।
पाकयज्ञो महायज्ञो यज्ञो यज्ञपतिर्यजुः ॥ ५६ ॥

यज्ञाङ्गो यज्ञगम्यश्च यज्वा यज्ञफलप्रदः ।
यज्ञाङ्गभूर्यज्ञपतिर्यज्ञश्रीर्यज्ञवाहनः ॥ ५७ ॥

यज्ञराड् यज्ञविध्वंसी यज्ञेशो यज्ञरक्षकः ।
सहस्रबाहुः सर्वात्मा सहस्राक्षः सहस्रपात् ।। ५८ ।।

सहस्रवदनो नित्यः सहस्रात्मा विराट् स्वराट् ।
सहस्रशीर्षो विश्वश्च तैजसः प्राज्ञ आत्मवान् ।। ५९ ।।

अणुर्बृहत्कृशः स्थूलो दीर्घो ह्रस्वश्च वामनः ।
सूक्ष्मः सूक्ष्मतरोऽनन्तो विश्वरूपो निरञ्जनः ।।। ६० ।।

अमृतेशोऽमृताहारोऽमृतदाताऽमृताङ्गवान् ।
अहोरूपस्त्रियामा च सन्धारूपो दिनात्मकः ।। ६१ ।।

अनिमेषो निमेषात्मा च कला काष्ठा क्षणात्मकः ।
मुहूर्तो घटिकारूपो यामो यामात्मकस्तथा ।। ६२ ।।

पूर्वाह्णरूपो मध्याह्नरूपः सायाह्नरूपकः ।
अपराह्णोऽतिनिपुणः सवनात्मा प्रजागरः ।। ६३ ।।

वेद्यो वेदयिता वेदो वेदद्दष्टो विदां वरः ।
विनयो नयनेता च विद्वज्जनबहुप्रियः ।। ६४ ।।

विश्वगोप्ता विश्वभोक्ता विश्वकृद्विश्वभेषजम् ।
विश्वंभरो विश्वपतिर्विश्वराड्विश्वमोहनः ।। ६५ ।।

विश्वसाक्षी विश्वहन्ता वीरो विश्वंभराधिपः ।
वीरबाहुर्वीरहन्ता वीराग्र्यो वीरसैनिकः ।। ६६ ।।

वीरवादप्रियः शूर एकवीरः सुराधिपः ।
शूरपद्मासुरद्वेषी तारकासुरभञ्जनः ।। ६७ ।।

ताराधिपस्तारहारः शूरहन्ताऽश्ववाहनः ।
शरभः शरसंभूतः शक्तः शरवणेशयः ।। ६८ ।।

शाङ्करिः शांभवः शंभुः साधुः साधुजनप्रियः ।
साराङ्गः सारकः सर्वः शार्वः शार्वजनप्रियः ॥ ६९ ॥

गङ्गासुतोऽतिगंभीरो गंभीरहृदयोऽनघः ।
अमोघविक्रमश्चक्रश्चक्रभूः शक्रपूजितः ॥ ७० ॥

चक्रपाणिश्चक्रपतिश्चक्रवालान्तभूपतिः ।
सार्वभौमस्सुरपतिः सर्वलोकाधिरक्षकः ॥ ७१ ॥

साधुपः सत्यसङ्कल्पः सत्यस्सत्यवतां वरः ।
सत्यप्रियः सत्यगतिः सत्यलोकजनप्रियः ॥ ७२ ॥

भूतभव्य भवद्रूपो भूतभव्यभवत्प्रभुः ।
भूतादिर्भूतमध्यस्थो भूतविध्वंसकारकः ॥ ७३ ॥

भूतप्रतिष्ठासंकर्ता भूताधिष्ठानमव्ययः ।
ओजोनिधिर्गुणनिधिस्तेजोराशिरकल्मषः ॥ ७४ ॥

कल्मषघ्नः कलिध्वंसी कलौ वरदविग्रहः ।
कल्याणमूर्तिः कामात्मा कामक्रोधविवर्जितः ॥ ७५ ॥

गोप्ता गोपायिता गुप्तिर्गुणातीतो गुणाश्रयः ।
सत्वमूर्ती रजोमूर्तिस्तमोमूर्ति श्चिदात्मकः ॥ ७६ ॥

देवसेनापतिर्भूमा महिमा महिमाकरः ।
प्रकाशरूपः पापघ्नः पवनः पावनोऽनलः ॥ ७७ ॥

कैलासनिलयः कान्तः कनकाचल कार्मुकः ।
निर्धूतो देवभूतिश्च व्याकृतिः क्रतुरक्षकः ॥ ७८ ॥

उपेन्द्र इन्द्रवन्द्यांघ्रिरुरुजंघ उरुक्रमः ।
विक्रान्तो विजयक्रान्तो विवेकविनयप्रदः ॥ ७९ ॥

अविनीतजनध्वंसी सर्वावगुणवर्जितः ।
कुलशैलैकनिलयो वल्लीवाञ्छितविभ्रमः ॥ ८० ॥

शांभवः शंभुतनयः शङ्कराङ्गविभूषणः ।
स्वयंभूः स्ववशः स्वस्थः पुष्कराक्षः पुरूद्भवः ॥ ८१ ॥

मनुर्मानवगोप्ता च स्थविष्ठः स्थविरो युवा ।
बालः शिशुर्नित्ययुवा नित्यकौमारवान् महान् ॥ ८२ ॥

अग्राह्यरूपो ग्राह्यश्च सुग्रहः सुन्दराकृतिः ।
प्रमर्दनः प्रभूतश्रीर्लोहिताक्षोऽरिमर्दनः ॥ ८३ ॥

त्रिधामा त्रिककुत्त्रिश्रीः त्रिलोकनिलयोऽलयः ।
शर्मदः शर्मवान् शर्म शरण्यः शरणालयः ॥ ८४ ॥

स्थाणुः स्थिरतरः स्थेयान् स्थिरश्रीः स्थिरविक्रमः ।
स्थिरप्रतिज्ञः स्थिरधीर्विश्वरेताः प्रजाभवः ॥ ८५ ॥

अत्ययः प्रत्ययः श्रेष्ठः सर्वयोगविनिःसृतः ।
सर्वयोगेश्वरः सिद्धः सर्वज्ञः सर्वदर्शनः ॥ ८६ ॥

वसुर्वसुमना देवो वसुरेता वसुप्रदः ।
समात्मा समदर्शी च समदः सर्वदर्शनः ॥ ८७ ॥

वृषाकृतिर्वृषारूढो वृषकर्मा वृषप्रियः ।
शुचिः शुचिमनाः शुद्धः शुद्धकीर्तिः शुचिश्रवाः ॥ ८८ ॥

रौद्रकर्मा महारौद्रो रुद्रात्मा रुद्रसंभवः ।
अनेकमूर्तिर्विश्वात्माऽनेकबाहुररिन्दमः ॥ ८९ ॥

वीरबाहुर्विश्वसेनो विनेयो विनयप्रदः ।
सर्वगः सर्ववित्सर्वः सर्ववेदान्तगोचरः ॥ ९० ॥

कविः पुराणोऽनुशास्ता स्थूलस्थूल अणोरणुः ।
भ्राजिष्णु र्विष्णु विनुतः कृष्णकेशः किशोरकः ॥ ९१ ॥

भोजनं भाजनं भोक्ता विश्वभोक्ता विशां पतिः ।
विश्वयोनिर्विशालाक्षो विरागो वीरसेवितः ॥ ९२ ॥

पुण्यः पुरुयशाः पूज्यः पूतकीर्तिः पुनर्वसुः ।
सुरेन्द्रः सर्वलोकेन्द्रो महेन्द्रोपेन्द्रवन्दितः ॥ ९३ ॥

विश्ववेद्यो विश्वपतिर्विश्वभृद्विश्वभेषजम् ।
मधुर्मधुरसङ्गीतो माधवः शुचिरूष्मलः ॥ ९४ ॥

शुक्रः शुभ्रगुणः शुक्लः शोकहन्ता शुचिस्मितः ।
महेष्वासो विष्णुपतिः महीहन्ता महीपतिः ॥ ९५ ॥

मरीचिर्मदनो मानी मातङ्गगतिरद्भुतः ।
हंसः सुपूर्णः सुमनाः भुजङ्गेशभुजावलिः ॥ ९६ ॥

पद्मनाभः पशुपतिः पारज्ञो वेदपारगः ।
पण्डितः परघाती च सन्धाता सन्धिमान् समः ॥ ९७ ॥

दुर्मर्षणो दुष्टशास्ता दुर्धर्षो युद्धधर्षणः ।
विख्यातात्मा विधेयात्मा विश्वप्रख्यातविक्रमः ॥ ९८ ॥

सन्मार्गदेशिको मार्गरक्षको मार्गदायकः ।
अनिरुद्धोऽनिरुद्धश्री रादित्यो दैत्यमर्दनः ॥ ९९ ।

अनिमेषोऽनिमेषार्च्यस्त्रिजगद्ग्रामणीर्गुणी ।
संपृक्तः संप्रवृत्तात्मा निवृत्तात्माऽऽत्मवित्तमः ॥ १०० ॥

अर्चिष्मानर्चनप्रीतः पाशभृत्पावको मरुत् ।
सोमः सौम्यः सोमसुतः सोमसुत्सोमभूषणः ॥ १०१ ॥

सर्वसामप्रियः सर्वसमः सर्वंसहो वसुः ।
उमासूनुरुमाभक्त उत्फुल्लमुखपङ्कजः ॥ १०२ ॥

अमृत्युरमरारातिमृत्युर्मृत्युञ्जयोऽजितः ।
मन्दारकुसुमापीडो मदनान्तकवल्लभः ॥ १०३ ॥

माल्यवन्मदनाकारो मालतीकुसुमप्रियः ।
सुप्रसादः सुराराध्यः सुमुखः सुमहायशाः ॥ १०४ ॥

वृषपर्वा विरूपाक्षो विष्वक्सेनो वृषोदरः ।
मुक्तो मुक्तगतिर्मोक्षो मुकुन्दो मुद्गली मुनिः ॥ १०५ ॥

श्रुतवान् सुश्रुतः श्रोता श्रुतिगम्यः श्रुतिस्तुतः ।
वर्धमानो वनरतिर्वानप्रस्थनिषेवितः ॥ १०६ ॥

वाग्मी वरो वावदूको वासुदेववरप्रदः ।
महेश्वरो मयूरस्थः शक्तिहस्तस्त्रिशूलधृत् ॥ १०७ ॥

ओजस्तेजश्च तेजस्वी प्रतापः सुप्रतापवान् ।
ऋद्धिः समृद्धिः संसिद्धिः सुसिद्धिः सिद्धसेवितः ॥ १०८ ॥

अमृताशोऽमृतवपुरमृतोऽमृतदायकः ।
चन्द्रमाश्चन्द्रवदनश्चन्द्रदृक् चन्द्रशीतलः ॥ १०९ ॥

मतिमान्नीतिमान्नीतिः कीर्तिमान्कीर्तिवर्धनः ।
औषधं चौषधीनाथः प्रदीपो भवमोचनः ॥ ११० ॥

भास्करो भास्वरतनुर्भानुर्भयविनाशनः ।
चतुर्युगव्यवस्थाता युगधर्मप्रवर्तकः ॥ १११ ॥

अयुजो मिथुनं योगो योगज्ञो योगपारगः ।
महाशनो महाभूतो महापुरुषविक्रमः ॥ ११२ ॥

युगान्तकृद्युगावर्तो दृश्यादृश्यस्वरूपकः ।
सहस्रजिन्महामूर्तिः सहस्रायुधमण्डितः ॥ ११३ ॥

अनन्तासुरसंहर्ता सुप्रतिष्ठः सुखाकरः ।
अक्रोधनः क्रोधहन्ता शत्रुक्रोधविमर्दनः ॥ ११४ ॥

विश्वमूर्तिर्विश्वबाहुर्विश्वदृग्विश्वतो मुखः ।
विश्वेशो विश्वसंसेव्यो द्यावाभूमिविवर्धनः ॥ ११५ ॥

अपान्निधिरकर्ताऽन्नमन्नदाताऽन्नदारुणः ।
अंभोजमौलिरुज्जीवः प्राणः प्राणप्रदायकः ॥ ११६ ॥

स्कन्दः स्कन्दधरो धुर्यो धार्यो धृतिरनातुरः ।
आतुरौषधिरव्यग्रो वैद्यनाथोऽगदङ्करः ॥ ११७ ॥

देवदेवो बृहद्भानुः स्वर्भानुः पद्मवल्लभः ।
अकुलः कुलनेता च कुलस्रष्टा कुलेश्वरः ॥ ११८ ॥

निधिर्निधिप्रियः शंखपद्मादिनिधिसेवितः ।
शतानन्दः शतावर्तः शतमूर्तिः शतायुधः ॥ ११९ ॥

पद्मासनः पद्मनेत्रः पद्मांघ्रिः पद्मपाणिकः ।
ईशः कारणकार्यात्मा सूक्ष्मात्मा स्थूलमूर्तिमान् ॥ १२० ॥

अशरीरी त्रिशरीरी शरीरत्रयनायकः ।
जाग्रत्प्रपञ्चाधिपतिः स्वप्नलोकाभिमानवान् ॥ १२१ ॥

सुषुप्त्यवस्थाभिमानी सर्वसाक्षी तुरीयगः ।
स्वापनः स्ववशो व्यापी विश्वमूर्तिर्विरोचनः ॥ १२२ ॥

वीरसेनो वीरवेषो वीरायुधसमावृतः ।
सर्वलक्षणलक्षण्यो लक्ष्मीवान् शुभलक्षणः ॥ १२३ ॥

समयज्ञः सुसमय समाधिजनवल्लभः ।
अतुलोऽतुल्यमहिमा शरभोपमविक्रमः ॥ १२४ ॥

अहेतुर्हेतुमान्हेतुः हेतुहेतुमदाश्रयः ।
विक्षरो रोहितो रक्तो विरक्तो विजनप्रियः ॥ १२५ ॥

महीधरो मातरिश्वा मांगल्यमकरालयः ।
मध्यमान्तादिरक्षोभ्यो रक्षोविक्षोभकारकः ॥ १२६ ॥

गुहो गुहाशयो गोप्ता गुह्यो गुणमहार्णवः ।
निरुद्योगो महोद्योगी निर्निरोधो निरङ्कुशः ॥ १२७ ॥

महावेगो महाप्राणो महेश्वरमनोहरः ।
अमृताशोऽमिताहारो मितभाष्यमितार्थवाक् ॥ १२८ ॥

अक्षोभ्यः क्षोभकृत्क्षेमः क्षेमवान् क्षेमवर्धनः ।
ऋद्ध ऋद्धिप्रदो मत्तो मत्तकेकिनिषूदनः ॥ १२९ ॥

धर्मो धर्मविदां श्रेष्ठो वैकुण्ठो वासवप्रियः ।
परधीरोऽपराक्रान्त परितुष्टः परासुहृत् ॥ १३० ॥

रामो रामनुतो रम्यो रमापतिनुतो हितः ।
विरामो विनतो विद्वान् वीरभद्रो विधिप्रियः ॥ १३१ ॥

विनयो विनयप्रीतो विमतोरुमदापहः ।
सर्वशक्तिमतां श्रेष्ठः सर्वदैत्यभयङ्करः ॥ १३२ ॥

शत्रुघ्नः शत्रुविनतः शत्रुसंघप्रधर्षकः ।
सुदर्शन ऋतुपतिर्वसन्तो माधवो मधुः ॥ १३३ ॥

वसन्तकेलिनिरतो वनकेलिविशारदः ।
पुष्पधूलीपरिवृतो नवपल्लवशेखरः ॥ १३४ ॥

जलकेलिपरो जन्यो जह्नुकन्योपलालितः ।
गाङ्गेयो गीतकुशलो गङ्गापूरविहारवान्।। १३५ ।।

गङ्गाधरो गणपतिर्गणनाथसमावृतः ।
विश्रामो विश्रमयुतो विश्वभुग्विश्वदक्षिणः ।। १३६ ।।

विस्तारो विग्रहो व्यासो विश्वरक्षण तत्परः ।
विनतानन्द कारी च पार्वतीप्राणनन्दनः ।।
विशाखः षण्मुखः कार्तिकेयः कामप्रदायकः ।। १३७ ।।

## श्रीसुब्रह्मण्यसहस्रनामावलिः-१

सुब्रह्मण्याय नमः । सुरेशानाय । सुरारिकुलनाशनाय । ब्रह्मण्याय । ब्रह्मविदे । ब्रह्मणे । ब्रह्मविद्यागुरवे । गुरवे । ईशानगुरवे । अव्यक्ताय । व्यक्तरूपाय । सनातनाय । प्रधानपुरुषाय । कर्त्रे । कर्मणे । कार्याय । कारणाय । अधिष्ठानाय । विज्ञानाय । भोक्त्रे नमः । (२०)

भोगाय नमः । केवलाय । अनादिनिधनाय । साक्षिणे । नियन्त्रे । नियमाय । यमाय । वाक्पतये । वाक्प्रदाय । वाग्मिने । वाच्याय । वाचे । वाचकाय । पितामहगुरवे । लोकगुरवे । तत्वार्थबोधकाय । प्रणवार्थोपदेष्ट्रे । अजाय । ब्रह्मणे । सनातनाय नमः । (४०)

वेदान्तवेद्याय नमः । वेदात्मने । वेदादये । वेदबोधकाय । वेदान्ताय । वेदगुह्याय । वेदशास्त्रार्थबोधकाय । सर्वविद्यात्मकाय । शान्ताय । चतुःषष्टिकलागुरवे । मन्त्रार्थाय । मन्त्रमूर्तये । मन्त्रतन्त्रप्रवर्तकाय । मन्त्रिणे । मन्त्राय । मन्त्रबीजाय । महामन्त्रोपदेशकाय । महोत्साहाय । महाशक्तये । महाशक्तिधराय नमः ।। ६० ।।

प्रभवे नमः। जगत्स्रष्ट्रे। जगद्धर्त्रे। जगन्मूर्तये। जगन्मयाय। जगदादये। अनादये। जगद्बीजाय। जगद्गुरवे। ज्योतिर्मयाय। प्रशान्तात्मने। सच्चिदानन्दविग्रहाय। सुखमूर्तये। सुखकराय। सुखिने। सुखकराकृतये। ज्ञात्रे। ज्ञेयाय। ज्ञानरूपाय। ज्ञप्तये नमः॥ (८०)

ज्ञानबलाय नमः। बुधाय। विष्णवे। जिष्णवे। ग्रसिष्णवे। प्रभविष्णवे। सहिष्णुकाय। वर्धिष्णवे। भूष्णवे। अजराय। तितिक्ष्णवे। क्षान्तये। आर्जवाय। ऋजवे। सुगम्याय। सुलभाय। दुर्लभाय। लाभाय। ईप्सिताय। विज्ञाय नमः॥ (१००)

विज्ञानभोक्त्रे नमः। शिवज्ञानप्रदायकाय। महदादये। अहङ्काराय। भूतादये। भूतभावनाय। भूतभव्यभविष्यते। भूतभव्यभवत्प्रभवे। देवसेनापतये। नेत्रे। कुमाराय। देव नायकाय। तारकारये। महावीर्याय। सिंहवक्त्र शिरोहराय। अनेककोटि ब्रह्माण्डपरिपूर्णासुरान्तकाय। सुरानन्दकराय। श्रीमते। असुरादिभयङ्कराय। असुरान्तः पुराक्रन्दकरभेरीनिनादनाय नमः। (१२०)

सुरवन्द्याय नमः। जनानन्दकरशिञ्जन्मणिध्वनये। स्फुटाट्टहाससंक्षुभ्यत्तारकासुरमानसाय। महाक्रोधाय। महोत्साहाय। महाबलपराक्रमाय। महाबुद्धये। महाबाहवे। महामायाय। महाधृतये। रणभीमाय। शत्रुहराय। धीरोदात्तगुणोत्तराय। महाधनुषे। महाबाणाय। महादेवप्रियात्मजाय। महाखड्गाय। महाखेटाय। महासत्वाय। महाद्युतये नमः॥ १४०

महर्धये नमः । महामायिने । मयूरवरवाहनाय । मयूरबर्हातपत्राय । मयूरनटनप्रियाय । महानुभावाय । अमेयात्मने । अमेयश्रिये । महाप्रभवे । सुगुणाय । दुर्गुणद्वेषिणे । निर्गुणाय । निर्मलाय । अमलाय । सुबलाय । विमलाय । कान्ताय । कमलासनपूजिताय । कालाय । कमलपत्राक्षाय नमः ॥ १६०

कलिकल्मषनाशकाय नमः । महारणाय । महायोद्ध्रे । महायुद्धप्रियाय । अभयाय । महारथाय । महाभागाय । भक्ताभीष्टफलप्रदाय । भक्तप्रियाय । प्रियाय । प्रेम्णे । प्रेयसे । प्रीतिधराय । सख्ये । गौरीकरसरोजाग्र लालनीय मुखांबुजाय । कृत्तिकास्तन्य पानैकव्यग्रषड्वदनाम्बुजाय । चन्द्रचूडाङ्गभूभाग-विहारणविशारदाय । ईशाननयनानन्द कन्दलावण्यनासिकाय । चन्द्रचूडकरांभोज परिमृष्टभुजावलये । लंबोदरसहक्रीडालंपटाय नमः ॥ १८०

शरसंभवाय नमः । अमराननालीक चकोरीपूर्णचन्द्रमसे । सर्वाङ्ग सुन्दराय । श्रीशाय । श्रीकराय । श्रीप्रदाय । शिवाय । वल्लीसखाय । वनचराय । वक्त्रे । वाचस्पतये । वराय । चन्द्रचूडाय । बर्हिपिञ्छशेखराय । मकुटोज्ज्वलाय । गुडाकेशाय । सुवृत्तोरुशिरसे । मन्दारशेखराय । बिम्बाधराय । कुन्ददन्ताय नमः ॥ २००

जपाशोणाग्रलोचनाय नमः । षड्दर्शनीनटीरङ्गरसनाय । मधुरस्वनाय । मेघगंभीरनिर्घोषाय । प्रियवाचे । प्रस्फुटाक्षराय । स्मितवक्त्राय । उत्पलाक्षाय । चारुगंभीरवीक्षणाय । कर्णान्तदीर्घनयनाय । कर्णभूषणभूषिताय । सुकुण्डलाय । चारुगण्डाय । कम्बुग्रीवाय । महाहनवे । पीनांसाय । गूढजत्रवे । पीनवृत्तभुजावलये । रक्ताङ्गाय । रत्नकेयूराय नमः ॥ २२०

रत्नकङ्कणभूषिताय । ज्याकिणाङ्कलसद्वामप्रकोष्ठवलयोज्ज्वलाय । रेखाङ्कुशध्वजच्छत्रपाणिपद्माय । महायुधाय । सुरलोकभयध्वान्तबालारुणकरोदयाय । अंगुलीयकरत्नांशु द्विगुणोद्यन्नखाङ्कुराय । पीनवक्षसे । महाहाराय । नवरत्नविभूषणाय । हिरण्यगर्भाय । हेमाङ्गाय । हिरण्यकवचाय । हराय । हिरण्मय शिरस्त्राणाय । हिरण्याक्षाय । हिरण्यदाय । हिरण्यनाभये । त्रिवलीललितोदरसुन्दराय । सुवर्णसूत्रविलसद्विशङ्कटकटीतटाय । पीतांबरधराय नमः । २४०

रत्नमेखलावृत मध्यकाय नमः । पीवरालोमवृत्तोद्यत्सुजानवे । गुप्तगुल्फकाय । शंखचक्राब्जकुलिशध्वजरेखांघ्रिपङ्कजाय । नवरत्नोज्ज्वलत्पादकटकाय । परमायुधाय । सुरेन्द्रमकुटप्रोद्यन्मणि रञ्जितपादुकाय । पूज्यांघ्रये । चारुनखराय । देवसेव्यस्वपादुकाय । पार्वतीपाणिकमलपरिमृष्टपदांबुजाय । मत्तमातङ्गगमनाय । मान्याय । मान्यगुणाकराय । क्रौञ्चदारणदक्षौजसे । क्षणाय । क्षणविभागकृते । सुगमाय । दुर्गमाय । दुर्गाय नमः । २६०

दुरारोहाय नमः । अरिदुःसहाय । सुभगाय । सुमुखाय । सूर्याय । सूर्यमण्डलमध्यगाय । स्वकिङ्करोपसंसृष्टसृष्टिसंरक्षिताखिलाय । जगत्स्रष्ट्रे । जगद्भर्त्रे । जगत्संहारकारकाय । स्थावराय । जङ्गमाय । जेत्रे । विजयाय । विजयप्रदाय । जयशीलाय । जितारातये । जितमायाय । जितासुराय । जितकामाय नमः । २८०

जितक्रोधाय नमः । जितमोहाय । सुमोहनाय । कामदाय । कामभृते । कामिने । कामरूपाय । कृतागमाय । कान्ताय ।

कल्याय । कलिध्वंसिने । कल्हारकुसुमप्रियाय । रामाय । रमयित्रे । रम्याय । रमणीजनवल्लभाय । रसज्ञाय । रसमूर्तये । रसाय । नवरसात्मकाय नमः । ३००

रसात्मने नमः । रसिकात्मने । रासक्रीडापराय । रतये । सूर्यकोटिप्रतीकाशाय । सोमसूर्याग्निलोचनाय । कलाभिज्ञाय । कलारूपिणे । कलापिने । सकलप्रभवे । बिन्दवे । नादाय । कला मूर्तये । कलातीताय । अक्षरात्मकाय । मात्राकाराय । स्वराकाराय । एकमात्राय । द्विमात्रकाय । त्रिमात्रकाय नमः । ३२०

चतुर्मात्राय नमः । व्यक्ताय । सन्ध्यक्षरात्मकाय । व्यञ्जनात्मने । वियुक्तात्मने । संयुक्तात्मने । स्वरामकाय । विसर्जनीयाय । अनुस्वाराय । सर्ववर्णतनवे । महते । अकारात्मने । उकारात्मने । मकारात्मने । त्रिवर्णकाय । ओङ्काराय । वषट्काराय । स्वाहाकाराय । स्वधाकृतये । आहुतये नमः । ३४०

हवनाय नमः । हव्याय । होत्रे । अध्वर्यवे । महाहविषे । ब्रह्मणे । उद्गात्रे । सदस्याय । बर्हिषे । इध्माय । समिधे । चरवे । कव्याय । पशवे । पुरोडाशाय । आमिक्षायै । वाजाय । वाजिनाय । पवनाय । पावनाय नमः । ३६०

पूताय नमः । पवमानाय । पराकृतये । पवित्राय । परिधये । पूर्णपात्राय । उद्भूतये । इन्धनाय । विशोधनाय । पशुपतये । पशुपाशविमोचकाय । पाकयज्ञाय । महायज्ञाय । यज्ञाय । यज्ञपतये । यजुषे । यज्ञाङ्गाय । यज्ञगम्याय । यज्वने । यज्ञफलप्रदाय नमः । ३८०

यज्ञाङ्गभुवे नमः । यज्ञपतये । यज्ञश्रिये । यज्ञवाहनाय । यज्ञराजे । यज्ञविध्वंसिने । यज्ञेशाय । यज्ञरक्षकाय । सहस्रबाहवे ।

सर्वात्मने। सहस्राक्षाय। सहस्रपदे। सहस्रवदनाय। नित्याय। सहस्रात्मने। विराजे। स्वराजे। सहस्रशीर्षाय। विश्वाय। तैजसाय नमः। ४००

प्राज्ञाय नमः। आत्मवते। अणवे। बृहते। कृशाय। स्थूलाय। दीर्घाय। ह्रस्वाय। वामनाय। सूक्ष्माय। सूक्ष्मतराय। अनन्ताय। विश्वरूपाय। निरञ्जनाय। अमृतेशाय। अमृताहाराय। अमृतदात्रे। अमृताङ्गवते। अहोरूपाय। त्रियामायै नमः। ४२०

सन्ध्यारूपाय नमः। दिनात्मकाय। अनिमेषाय। निमेषात्मने। कलायै। काष्ठायै। क्षणात्मकाय। मुहूर्ताय। घटिकारूपाय। यामाय। यामात्मकाय। पूर्वाह्णरूपाय। मध्याह्नरूपाय। सायाह्नरूपकाय। अपराह्णाय। अतिनिपुणाय। सवनात्मने। प्रजागराय। वेद्याय। वेदयित्रे नमः। ४४०

वेदाय नमः। वेददृष्टाय। विदांवराय। विनयाय। नयनेत्रे। विद्वज्जनबहुप्रियाय। विश्वगोप्त्रे। विश्वभोक्त्रे। विश्वकृते। विश्वभेषजाय। विश्वंभराय। विश्वपतये। विश्वराजे। विश्वमोहनाय। विश्वसाक्षिणे। विश्वहन्त्रे। वीराय। विश्वंभराधिपाय। वीरबाहवे। वीरहन्त्रे नमः॥ ४६०

वीराग्र्याय नमः। वीरसैनिकाय। वीरवादप्रियाय। शूराय। एकवीराय। सुराधिपाय। शूरपद्मासुरद्वेषिणे। तारकासुरभञ्जनाय। ताराधिपाय। तारहाराय। शूरहन्त्रे। अश्ववाहनाय। शरभाय। शरसंभूताय। शक्ताय। शरवणेशयाय। शाङ्करये। शांभवाय। शंभवे। साधवे नमः। ४८०

साधुजनप्रियाय नमः। साराङ्गाय। सारकाय। सर्वस्मै। शार्वाय। शार्वजनप्रियाय। गङ्गासुताय। अतिगंभीराय।

गंभीरहृदयाय । अनघाय । अमोघविक्रमाय । चक्राय । चक्रभुवे । शक्रपूजिताय । चक्रपाणये । चक्रपतये । चक्रवालान्तभूपतये । सार्वभौमाय । सुरपतये । सर्वलोकाधिरक्षकाय नमः । ५००

साधुपाय नमः । सत्यसङ्कल्पाय । सत्याय । सत्यवतां वराय । सत्यप्रियाय । सत्यगतये । सत्यलोकजनप्रियाय । भूतभव्यभवद्रूपाय । भूतभव्यभवत्प्रभवे । भूतादये । भूतमध्यस्थाय । भूतविध्वंसकारकाय । भूतप्रतिष्ठासङ्कर्त्रे । भूताधिष्ठानाय । अव्ययाय । ओजोनिधये । गुणनिधये । तेजोराशये । अकल्मषाय । कल्मषघ्नाय नमः । ५२०

कलिध्वंसिने नमः । कलौ वरदविग्रहाय । कल्याणमूर्तये । कामात्मने । कामक्रोधविवर्जिताय । गोप्त्रे । गोपायित्रे । गुप्तये । गुणातीताय । गुणाश्रयाय । सत्वमूर्तये । रजोमूर्तये । तमोमूर्तये । चिदात्मकाय । देवसेनापतये । भूम्ने । महिम्ने । महिमाकराय । प्रकाशरूपाय । पापघ्नाय नमः ।। ५४०

पवनाय नमः । पावनाय । अनलाय । कैलासनिलयाय । कान्ताय । कनकाचलकार्मुकाय । निर्धूताय । देवभूतये । व्याकृतये । क्रतुरक्षकाय । उपेन्द्राय । इन्द्रवन्द्यांघ्रये । उरुजङ्घाय । उरुक्रमाय । विक्रान्ताय । विजयक्रान्ताय । विवेकविनयप्रदाय । अविनीतजनध्वंसिने । सर्वावगुणवर्जिताय । कुलशैलैकनिलयाय नमः । ५६०

वल्लीवाञ्छित विभ्रमाय नमः । शांभवाय । शंभुतनयाय । शङ्कराङ्गविभूषणाय । स्वयंभुवे । स्ववशाय । स्वस्थाय । पुष्कराक्षाय । पुरूद्भवाय । मनवे । मानवगोप्त्रे । स्थविष्ठाय । स्थविराय । यूने । बालाय । शिशवे । नित्ययूने । नित्य कौमारवते । महते । अग्राह्यरूपाय नमः ।। ५८०

ग्राह्याय नमः । सुग्रहाय । सुन्दराकृतये । प्रमर्दनाय । प्रभूतश्रिये । लोहिताक्षाय । अरिमर्दनाय । त्रिधाम्ने । त्रिककुदे । त्रिश्रिये । त्रिलोकनिलयाय । अलयाय । शर्मदाय । शर्मवते । शर्मणे । शरण्याय । शरणालयाय । स्थाणवे । स्थिरतराय । स्थेयसे नमः । ६००

स्थिरश्रिये नमः । स्थिरविक्रमाय । स्थिरप्रतिज्ञाय । स्थिरधिये । विश्वरेतसे । प्रजाभवाय । अत्ययाय । प्रत्ययाय । श्रेष्ठाय । सर्वयोगविनिःसृताय । सर्वयोगेश्वराय । सिद्धाय । सर्वज्ञाय । सर्वदर्शनाय । वसवे । वसुमनसे । देवाय । वसुरेतसे । वसुप्रदाय । समात्मने नमः ।। ६२०

समदर्शिने नमः । समदाय । सर्वदर्शनाय । वृषाकृतये । वृषारूढाय । वृषकर्मणे । वृषप्रियाय । शुचये । शुचिमनसे । शुद्धाय । शुद्धकीर्तये । शुचिश्रवसे । रौद्रकर्मणे । महारौद्राय । रुद्रात्मने । रुद्रसंभवाय । अनेकमूर्तये । विश्वात्मने । अनेकबाहवे । अरिन्दमाय नमः ।। ६४०

वीरबाहवे नमः । विश्वसेनाय । विनेयाय । विनयप्रदाय । सर्वगाय । सर्वविदे । सर्वस्मै । सर्ववेदान्तगोचराय । कवये । पुराणाय । अनुशास्त्रे । स्थूल स्थूलाय । अणोरणवे । भ्राजिष्णवे । विष्णु विनुताय । कृष्णकेशाय । किशोरकाय । भोजनाय । भाजनाय । भोक्त्रे नमः ।। ६६०

विश्वभोक्त्रे नमः । विशांपतये । विश्वयोनये । विशालाक्षाय । विरागाय । वीरसेविताय । पुण्याय । पुरुयशसे । पूज्याय । पूतकीर्तये । पुनर्वसवे । सुरेन्द्राय । सर्वलोकेन्द्राय । महेन्द्रोपेन्द्रवन्दिताय । विश्ववेद्याय । विश्वपतये । विश्वभृते । विश्वभेषजाय । मधवे । मधुरसङ्गीताय नमः । ६८०

माधवाय नमः । शुचये । ऊष्मलाय । शुक्राय । शुभ्रगुणाय । शुक्लाय । शोकहन्त्रे । शुचिस्मिताय । महेष्वासाय । विष्णुपतये । महीहन्त्रे । महीपतये । मरीचये । मदनाय । मानिने । मातङ्गगतये । अद्भुताय । हंसाय । सुपूर्णाय । सुमनसे नमः ।। ७००

भुजङ्गेशभुजावलये नमः । पद्मनाभाय । पशुपतये । पारज्ञाय । वेदपारगाय । पण्डिताय । परघातिने । सन्धात्रे । सन्धिमते । समाय । दुर्मर्षेणाय । दुष्टशास्त्रे । दुर्धर्षाय । युद्धधर्षणाय । विख्यातात्मने । विधेयात्मने । विश्वप्रख्यातविक्रमाय । सन्मार्गदेशिकाय । मार्गरक्षकाय । मार्गदायकाय नमः । ७२०

अनिरुद्धाय नमः । अनिरुद्धश्रिये । आदित्याय । दैत्यमर्दनाय । अनिमेषाय । अनिमेषार्च्याय । त्रिजगद्ग्रामण्ये । गुणिने । संपृक्ताय । संप्रवृत्तात्मने । निवृत्तात्मने । आत्मवित्तमाय । अर्चिष्मते । अर्चनप्रीताय । पाशभृते । पावकाय । मरुते । सोमाय । सौम्याय । सोमसुताय नमः । ७४०

सोमसुते नमः । सोम भूषणाय । सर्व सामप्रियाय । सर्वसमाय । सर्वंसहाय । वसवे । उमासूनवे । उमाभक्ताय । उत्फुल्लमुखपङ्कजाय । अमृत्यवे । अमरारातिमृत्यवे । मृत्युञ्जयाय । अजिताय । मन्दारकुसुमापीडाय । मदनान्तकवल्लभाय । माल्यवन्मदनाकाराय । मालतीकुसुमप्रियाय । सुप्रसादाय । सुराराध्याय । सुमुखाय नमः । ७६०

सुमहायशसे नमः । वृषपर्वणे । विरूपाक्षाय । विष्वक् सेनाय । वृषोदराय । मुक्ताय । मुक्तगतये । मोक्षाय । मुकुन्दाय । मुद्गलिने । मुनये । श्रुतवते । सुश्रुताय । श्रोत्रे । श्रुतिगम्याय ।

श्रुतिस्तुताय । वर्धमानाय । वनरतये । वानप्रस्थनिषेविताय । वाग्मिने नमः ॥ ७८०

वराय नमः । वावदूकाय । वासुदेववरप्रदाय । महेश्वराय । मयूरस्थाय । शक्तिहस्ताय । त्रिशूलधृते । ओजसे । तेजसे । तेजस्विने । प्रतापाय । सुप्रतापवते । ऋद्धये । समृद्धये । संसिद्धये । सुसिद्धये । सिद्धसेविताय । अमृताशाय । अमृतवपुषे । अमृताय नमः । ८००

अमृतदायकाय नमः । चन्द्रमसे । चन्द्रवदनाय । चन्द्रदृशे । चन्द्रशीतलाय । मतिमते । नीतिमते । नीतये । कीर्तिमते । कीर्तिवर्धनाय । औषधाय । ओषधीनाथाय । प्रदीपाय । भवमोचनाय । भास्कराय । भास्करतनवे । भानवे । भयविनाशनाय । चतुर्युगव्यवस्थात्रे । युगधर्म प्रवर्तकाय नमः । ८२०

अयुजाय नमः । मिथुनाय । योगाय । योगज्ञाय । योगपारगाय । महाशनाय । महाभूताय । महापुरुषविक्रमाय । युगान्तकृते । युगावर्ताय । दृश्यादृश्यस्वरूपकाय । सहस्रजिते । महामूर्तये । सहस्रायुधमण्डिताय । अनन्तासुरसंहर्त्रे । सुप्रतिष्ठाय । सुखाकराय । अक्रोधनाय । क्रोधहन्त्रे । शत्रुक्रोधविमर्दनाय नमः । ८४०

विश्वमूर्तये नमः । विश्वबाहवे । विश्वदृङ्(शे) । विश्वतोमुखाय । विश्वेशाय । विश्वसंसेव्याय । द्यावाभूमिविवर्धनाय । अपान्निधये । अकर्त्रे । अन्नाय । अन्नदात्रे ।

अन्नदारुणाय । अंभोजिमौलये । उज्जीवाय । प्राणाय । प्राणप्रदायकाय। स्कन्दाय। स्कन्दधराय। धुर्याय। धार्याय। धृतये नमः। ८६०

अनातुराय नमः। आतुरौषधये। अव्यग्राय। वैद्यनाथाय। अगदङ्कराय। देवदेवाय। बृहद्भानवे। स्वर्भानवे। पद्मवल्लभाय। अकुलाय। कुलनेत्रे। कुलस्रष्ट्रे। कुलेश्वराय। निधये। निधिप्रियाय। शंखपद्मादिनिधिसेविताय। शतानन्दाय। शतावर्ताय। शतमूर्तये। शतायुधाय नमः ।। ८८०

पद्मासनाय नमः। पद्मनेत्राय। पद्मांघ्रये। पद्मपाणिकाय। ईशाय । कारणकार्यात्मने । सूक्ष्मात्मने । स्थूलमूर्तिमते । अशरीरिणे। त्रिशरीरिणे । शरीरत्रय नायकाय । जाग्रत्प्रपञ्चाधिपतये । स्वप्नलोकाभिमानवते । सुषुप्त्यवस्थाभिमानिने। सर्वसाक्षिणे। तुरीयकाय। स्वापनाय। स्ववशाय। व्यापिने। विश्वमूर्तये नमः। ९००

विरोचनाय नमः । वीरसेनाय । वीरवेषाय । वीरायुधसमावृताय । सर्वलक्षणलक्षण्याय । लक्ष्मीवते । शुभलक्षणाय । समयज्ञाय । सुसमयसमाधिजन वल्लभाय । अतुल्याय । अतुल्यमहिम्ने । शरभोपम विक्रमाय । अहेतवे । हेतुमते। हेतवे। हेतुहेतुमदाश्रयाय। विक्षराय। रोहिताय। रक्ताय। विरक्ताय नमः ।। ९२०

विजनप्रियाय नमः । महीधराय । मातरिश्वने । माङ्गल्यमकरालयाय । मध्यमान्तादये । अक्षोभ्याय ।

रक्षोविक्षोभकारकाय । गुहाय । गुहाशयाय । गोप्त्रे । गुह्याय । गुणमहार्णवाय । निरुद्योगाय । महोद्योगिने । निर्निरोधाय । निरङ्कुशाय । महावेगाय । महाप्राणाय । महेश्वरमनोहराय । अमृताशाय नमः । ९४०

अमिताहाराय। मितभाषिणे। अमितार्थवाचे। अक्षोभ्याय। क्षोभकृते। क्षेमाय। क्षेमवते। क्षेमवर्धनाय। ऋद्धाय। ऋद्धिप्रदाय। मत्ताय । मत्तकेकिनिषूदनाय । धर्माय । धर्मविदां श्रेष्ठाय । बैकुण्ठाय। वासवप्रियाय । परधीराय । अपराक्रान्ताय । परितुष्टाय । परासुहृते नमः । ९६०

रामाय नमः । रामनुताय । रम्याय । रमापतिनुताय । हिताय । विरामाय । विनताय । विदुषे । वीरभद्राय । विधिप्रियाय । विनयाय । विनयप्रीताय । विमतोरु मदापहाय । सर्वशक्तिमतां श्रेष्ठाय । सर्वदैत्यभयङ्कराय । शत्रुघ्नाय । शत्रुविनताय । शत्रुसंघप्रधर्षकाय । सुदर्शनाय । ऋतुपतये नमः । ९८०

वसन्ताय नमः । माधवाय । मधवे । वसन्तकेलि निरताय । वनकेलिविशारदाय । पुष्पधूलीपरिवृताय । नवपल्लवशेखराय । जनकेलिपराय । जन्याय । जह्नुकन्योपलालिताय । गांगेयाय । गीतकुशलाय । गङ्गापूराविहारवते । गङ्गाधराय । गणपतये । गणनाथसमावृताय । विश्रामाय । विश्रमयुताय । विश्वभुजे । विश्वदक्षिणाय नमः । १०००

विस्ताराय नमः । विग्रहाय । व्यासाय । विश्वरक्षणतत्पराय । विनतानन्दकारिणे । पार्वतीप्राणनन्दनाय । विशाखाय । षण्मुखाय । कार्तिकेयाय । कामप्रदायकाय नमः । १०१०

## ॥ षण्मुखसहस्रनामस्तोत्रम् ॥

(अकारादिक्षकारान्तम्)

ऋषय ऊचुः—

सर्वशास्त्रार्थतत्त्वज्ञ सर्वलोकोपकारक ।
वयं चातिथयः प्राप्ता आतिथेयोऽसि सुव्रत ॥ १ ॥

ज्ञानदानेन संसारसागरात्तारयस्व नः ।
कलौ कलुषचित्ता ये नराः पापरताः सदा ॥ २ ॥

केन स्तोत्रेण मुच्यन्ते सर्वपातकबन्धनात् ।
इष्टसिद्धिकरं पुण्यं दुःखदारिद्र्यनाशनम् ॥ ३ ॥

सर्वरोगहरं स्तोत्रं सूत नो वक्तुमर्हसि ।

श्रीसूत उवाच—

शृणुध्वमृषयः सर्वे नैमिषारण्यवासिनः ॥ ४ ॥

तत्त्वज्ञानतपोनिष्ठाः सर्वशास्त्रविशारदाः ।
स्वयंभुवा पुरा प्रोक्तं नारदाय महात्मने ॥ ५ ॥

तदहं संप्रवक्ष्यामि श्रोतुं कौतूहलं यदि ।

ऋषय ऊचुः -

किमाह भगवान्ब्रह्मा नारदाय महात्मने ॥ ६ ॥

सूतपुत्र महाभाग वक्तुमर्हसि सांप्रतम् ।

श्रीसूत उवाच—

दिव्यसिंहासनासीनं सर्वदेवैरभिष्टुतम् ।। ७ ।।

साष्टाङ्गं प्रणिपत्यैनं ब्रह्माणं भुवनेश्वरम् ।
नारदः परिपप्रच्छ कृताञ्जलिरुपस्थितः ।। ८ ।।

नारद उवाच—

लोकनाथ सुरश्रेष्ठ सर्वज्ञ करुणाकर ।
षण्मुखस्य परं स्तोत्रं पावनं पापनाशनम् ।। ९ ।।

धातस्त्वं पुत्रवात्सल्यात्तद्वद प्रणताय मे ।
उपदिश्य तु मां देव रक्ष रक्ष कृपानिधे ।। १० ।।

ब्रह्मा उवाच—

शृणु वक्ष्यामि देवर्षे स्तवराजमिमं परम् ।

मातृकामालिकायुक्तं ज्ञानमोक्षसुखप्रदम् ।। ११ ।।

सहस्राणि च नामानि षण्मुखस्य महात्मनः ।
यानि नामानि दिव्यानि दुःखरोगहराणि च ।। १२ ।।

तानि नामानि वक्ष्यामि कृपया त्वयि नारद ।

जपमात्रेण सिध्यन्ति मनसा चिन्तितान्यपि ।। १३ ।।

इहामुत्र परं भोगं लभते नात्र संशयः ।
इदं स्तोत्रं परं पुण्यं कोटियज्ञफलप्रदम् ।
सन्देहो नात्र कर्तव्यः शृणु मे निश्चितं वचः ।। १४ ।।

ॐ अस्य श्रीसुब्रह्मण्यसहस्रनामस्तोत्रमहामन्त्रस्य ब्रह्मा ऋषिः । अनुष्टुप्छन्दः । सुब्रह्मण्यो देवता । शरजन्माक्षय इति बीजम् । शक्तिधरोऽक्षय इति शक्तिः । कार्तिकेय इति कीलकम् । क्रौञ्चभेदीत्यर्गलम् । शिखिवाहन इति कवचम् । षण्मुख इति ध्यानम् । श्रीसुब्रह्मण्यप्रसादसिद्ध्यर्थे जपे विनियोगः ।

[1]ॐ शं ॐकारस्वरूपाय ओजोधराय ओजस्विने सुहृदयाय हृष्टचित्तात्मने भास्वररूपाय अङ्गुष्ठाभ्यां नमः । ॐ रं षट्कोणमध्यनिलयाय षट्किरीटधराय श्रीमते षडाधाराय तर्जनीभ्यां नमः । ॐ वं षण्मुखाय शरजन्मने शुभलक्षणाय शिखिवाहनाय मध्यमाभ्यां नमः । ॐ णं कृशानुसंभवाय कवचिने कुक्कुटध्वजाय अनामिकाभ्यां नमः । ॐ भं कन्दर्पकोटिदीप्यमानाय द्विषड्बाहवे द्वादशाक्षाय कनिष्ठिकाभ्यां नमः । ॐ वं खेटधराय

---

1. एवमपि कराङ्गन्यासक्रमः- यथा ओं शं ओङ्कारस्वरूपाय ओजोधराय ओजस्विने सुहृद्याय हृष्टचित्तात्मने भास्वद्रूपाय अंगुष्ठाभ्यां नमः । हृदयाय नमः । ओं रं षट्कोणमध्यनिलयाय षट्किरीटधराय श्रीमते षडाधाराय ललाटषण्णेत्राय अभयवरदहस्ताय तर्जनीभ्यां नमः । शिरसे स्वाहा । ओं वं षण्मुखाय शरजन्मने शुभलक्षणाय शिखिवाहनाय षडक्षराय स्वामिनाथाय मध्यमाभ्यां नमः । शिखायै वषट् । ओं णं कृशानुसंभवाय कवचिने कुक्कुटध्वजाय शूरमर्दनाय कुमाराय सुब्रह्मण्याय अनामिकाभ्यां नमः । कवचाय हुं । ओं भं कन्दर्पकोटि दिव्यविग्रहाय द्विषड्बाहवे द्वादशाक्षराय नित्यज्ञानस्वरूपाय द्वादशाक्षाय मूलप्रकृतिरहिताय कनिष्ठिकाभ्यां नमः । नेत्र त्रयाय वौषट् । ओं वं सच्चिदानन्दस्वरूपाय सर्वरूपात्मने खेटधराय खड्गिने शक्तिहस्ताय ब्रह्मैकरूपिणे करतलकरपृष्ठाभ्यां नमः । अस्त्राय फट् ।

खड्गिने शक्तिहस्ताय करतलकरपृष्ठाभ्यां नमः । एवं हृदयादिन्यासः । भूर्भुवस्सुवरोमिति दिग्बन्धः ।

ध्यायेत्षण्मुखमिन्दुकोटिसदृशं रत्नप्रभाशोभितं
बालार्कद्युतिषट्किरीटविलसत्केयूरहारान्वितम् ।
कर्णालम्बितकुण्डलप्रविलसद्गण्डस्थलाशोभितं
काञ्चीकङ्कणकिंकिणीरवयुतं शृङ्गारसारोदयम् ।। १ ।।

ध्यायेदीप्सितसिद्धिदं शिवसुतं श्रीद्वादशाक्षं गुहं
खेटं कुक्कुटमंकुशं च वरदं पाशं धनुश्चक्रकम् ।
वज्रं शक्तिमसिं च शूलमभयं दोर्भिर्धृतं षण्मुखं
देवं चित्रमयूरवाहनगतं चित्राम्बरालंकृतम् ।। २ ।।

षड्वक्त्रं शिखिवाहनं त्रिणयनं चित्रांबरालङ्कृतं
वज्रं शक्तिमसिं त्रिशूलमभयं खेटं धनुश्चक्रकम् ।
पाशं कुक्कुटमङ्कुशं च वरदं दोर्भिर्दधानं सदा
ध्यायेदीप्सित सिद्धिदं शिवसुतं स्कन्दं सुराराधितम् ।। ३ ।।

द्विषड्भुजं षण्मुखमंबिकासुतं कुमार मादित्यसहस्रतेजसम् ।
वन्दे मयूरासनमग्निसंभवं सेनान्यमद्याहमभीष्ट सिद्धिदम् ।। ४ ।।

अचिन्त्यशक्तिरनघस्त्वक्षोभ्यस्त्वपराजितः ।
अनाथवत्सलोऽमोघस्त्वशोकोऽप्यजरोऽभयः ।। १ ।।

अत्युदारो ह्यघहरस्त्वग्रगण्योऽद्रिजासुतः ।
अनन्तमहिमाऽपारोऽनन्तसौख्यप्रदोऽव्ययः ।। २ ।।

अनन्तमोक्षदोऽनादिरप्रमेयोऽक्षरोऽच्युतः ।
अकल्मषोऽभिरामोऽग्रधुर्यश्चामितविक्रमः [1] ।। ३ ।।

---

1. अतुलश्चामृतोऽघोरो ह्यनन्तोऽनन्तविक्रम इत्यधिकम् ।

अनाथनाथो ह्यमलो ह्यप्रमत्तोऽमरप्रभुः ।
अरिन्दमोऽखिलाधारस्त्वणिमादिगुणोऽग्रणीः ॥ ४ ॥

अचञ्चलोऽमरस्तुत्यो ह्यकलङ्कोऽमिताशनः ।
अग्निभूरनवद्याङ्गो ह्यद्भुतोऽभीष्टदायकः ॥ ५ ॥

अतीन्द्रियोऽप्रमेयात्मा ह्यदृश्योऽव्यक्तलक्षणः ।
आपद्विनाशकस्त्वार्य आढ्य आगमसंस्तुतः ॥ ६ ॥

आर्तसंरक्षणस्त्वाद्य आनन्दस्त्वार्यसेवितः ।
आश्रितेष्टार्थवरद आनन्द्यार्तफलप्रदः ॥ ७ ॥

आश्चर्यरूप आनन्द आपन्नार्तिविनाशनः[1] ।
इभवक्त्रानुजस्त्विष्ट इभासुरहरात्मजः ॥ ८ ॥

इतिहासश्रुतिस्तुत्य इन्द्रभोगफलप्रदः ।
इष्टापूर्तफलप्राप्तिरिष्टेष्टवरदायकः ॥ ९ ॥

इहामुत्रेष्टफलद इष्टदस्त्विन्द्रवन्दितः ।
ईडनीयस्त्वीशपुत्र ईप्सितार्थप्रदायकः ॥ १० ॥

ईतिभीतिहरश्चेड्य ईषणात्रयवर्जितः[2] ।
उदारकीर्तिरुद्योगी चोत्कृष्टोरुपराक्रमः ॥ ११ ॥

उत्कृष्टशक्तिरुत्साह उदारश्चोत्सवप्रियः ।
उज्जृम्भ उद्भवश्चोग्र उदग्रश्चोग्रलोचनः ॥ १२ ॥

---

*1.* इतः- आराधित पदद्वन्द्व आगमार्थविशारदः । आनन्दसुन्दराकार आब्रह्मस्तंबरूपकः । आधारषट्क निलयः आदिमध्यान्तवर्जितः । आब्रह्मकीटजनकः आखण्डलसुताधिपः- इत्यधिकम् । *2.* ईश्वरार्पित वेदान्त ईश्वर प्रियनन्दनः । ईश्वराङ्क विहारी चेशिता चेश्वररूपधृत्- इत्यधिकम् ।

उन्मत्त उग्रशमन उद्वेगघ्नोरगेश्वरः ।
उरुप्रभावश्चोदीर्ण उमापुत्र उदारधीः[1] ॥ ३ ॥

ऊर्ध्वरेतःसुतस्तूर्ध्वगतिदस्तूर्जपालकः ।
ऊर्जितस्तूर्ध्वगस्तूर्ध्व ऊर्ध्वलोकैकनायकः ।१४॥

ऊर्जावानूर्जितोदार ऊर्जितोर्जितशासनः[2] ।
ऋषिदेवगणस्तुत्य ऋणत्रयविमोचनः ॥ १ ॥

ऋजुरूपो ह्यृजुकर ऋजुमार्गप्रदर्शनः ।
ऋतंभरो ह्यृजुप्रीत ऋषभस्त्वृद्धिदस्त्वृतः[3] ॥ १६ ॥

लुलितोद्धारको लूतभवपाशप्रभञ्जनः[4] ।
एणाङ्कधरसत्पुत्र एक एनोविनाशनः[5] ॥ १७ ॥

ऐश्वर्यदश्चैन्द्रभोगी चैतिह्यश्चैन्द्रवन्दितः[6] ।
ओजस्वी चौषधिस्थानमोजोदश्चौदनप्रदः[7] ॥ १८ ॥

औदार्यशील औमेय औग्र औन्नत्यदायकः ।
औदार्य औषधकर औषधं चौषधाकरः ॥ १९ ॥

---

*1.* उदग्रवैभवो दग्रबुद्धिदोदग्रहेतुमान् इत्यधिकम्। *2.* इतः- ऊरीकृत धनुर्बाण ऊर्मिषट्क विनाशनः - इत्यधिकम्। *3.* इतः- ऋग्वेदादि स्वरूपश्च ऋद्धात्मा ऋषिपूजितः । ऋलेखवर्त्त्रिनाड्यन्तः सुषुम्नानाडिमध्यगः । ॠकृत्स्वप्नाद्यजाग्रान्तमध्यो ह्यृतंभरात्मकः- इत्यधिकम्। *4.* इतः- लुप्ताचारमनोदूरो लुप्तदुःखो लुलत्प्रभः । लूनमायासुरो लूनसंसाराख्यमहावनः- इत्यधिकम् । *5.* एकाग्रध्यानशीलश्चाप्येकान्त ध्यानपूजित इत्यधिकम्। *6.* इतः- ऐशान पदसन्दायी चैन्द्रदिक्पालजाधिपः इत्यधिकम्। 7. इतः- ओङ्काररूपी चौङ्कार ओङ्कारार्थविशारदः- इत्यधिकम्।

अंशुमानंशुमालीड्य अम्बिकातनयोऽन्नदः ।
अन्धकारिसुतोऽन्धत्वहारी चाम्बुजलोचनः ॥ २० ॥

अस्तमायोऽमराधीशो ह्यस्पष्टोऽस्तोकपुण्यदः ।
अस्तामित्रोऽस्तरूपश्चास्खलत्सुगतिदायकः ॥ २१ ॥

कार्तिकेयः कामरूपः कुमारः क्रौञ्चदारणः ।
कामदः कारणं काम्यः कमनीयः कृपाकरः ॥ २२ ॥

काञ्चनाभः कान्तियुक्तः कामी कामप्रदः कविः ।
कीर्तिकृत्कुक्कुटधरः कूटस्थः कुवलेक्षणः ॥ २३ ॥

कुङ्कुमाङ्गः क्लमहरः कुशलः कुक्कुटध्वजः ।
कुशानुसंभवः क्रूरः क्रूरघ्नः कलितापहृत् ॥ २४ ॥

कामरूपः कल्पतरुः कान्तः कामितदायकः ।
कल्याणकृत्क्लेशनाशः कृपालुः करुणाकरः ॥ २५ ॥

कलुषघ्नः क्रियाशक्तिः कठोरः कवची कृती ।
कोमलाङ्गः कुशप्रीतः[1] कुत्सितघ्नः कलाधरः ॥ २६ ॥

ख्यातः खेटधरः खड्गी खट्वाङ्गी खलनिग्रहः ।
ख्यातिप्रदः खेचरेशः ख्यातेहः खेचरस्तुतः ॥ २७ ॥

खरतापहरः खस्थः खेचरः खेचराश्रयः ।
खण्डेन्दुमौलितनयः खेलः खेचरपालकः ॥ २८ ॥

खस्थलः खण्डितार्कश्च[2] खेचरीजनपूजितः[3] ।
गाङ्गेयो गिरिजापुत्रो गणनाथानुजो गुहः ॥ २९ ॥

---

*1.* कुहूप्रीतः *2.* खस्थप्रियः खण्डितार्कः *3.* इतः- खेटाद्यायुधसंपन्नः खर्वेतरपदप्रदः- इत्यधिकम् ।

गोप्ता गीर्वाणसंसेव्यो गुणातीतो गुहाश्रयः ।
गतिप्रदो गुणनिधिः गम्भीरो गिरिजात्मजः ॥ ३० ॥

गूढरूपो गदहरो गुणाधीशो गुणाग्रणीः[1] ।
गोधरो गहनो गुप्तो गर्वघ्नो गुणवर्धनः ॥ ३१ ॥

गुह्यो गुणज्ञो गीतिज्ञो गतातङ्को गुणाश्रयः[2] ।
गद्यपद्यप्रियो गुण्यो गोस्तुतो गगनेचरः ॥ ३२ ॥

गणनीयचरित्रश्च गतक्लेशो गुणार्णवः[3] ।
घूर्णिताक्षो घृणिनिधिः घनगम्भीरघोषणः ॥ ३३ ॥

घण्टानादप्रियो घोषो घोराघौघविनाशनः ।
घनानन्दो घर्महन्ता[4] घृणावान् घृष्टिपातकः[5] ॥ ३४ ॥

घृणी घृणाकरो घोरो घोरदैत्यप्रहारकः ।
घटितैश्वर्यसंदोहो घनार्थो घनसंक्रमः[6] ॥ ३५ ॥

चित्रकृच्चित्रवर्णश्च चञ्चलश्चपलद्युतिः ।
चिन्मयश्चित्स्वरूपश्च चिरानन्दश्चिरंतनः ॥ ३६ ॥

चित्रकेलिश्चित्रतरश्चिन्तनीयश्चमत्कृतिः ।
चोरघ्नश्चतुरश्चारुश्चामीकरविभूषणः ॥ ३७ ॥

चन्द्रार्ककोटिसदृशश्चन्द्रमौलितनूभवः[7] ।
छादिताङ्गश्छद्महन्ता छेदिताखिलपातकः ॥ ३८ ॥

---

1. गणाग्रणीः, 2. गुणोत्तरः, 3. गुहाश्रयः 4. घनप्रियो घनानन्दो 5. घृष्टपातकः 6. घनविक्रमः । इतः घृणिमण्डलरूपश्च घनसंपत्प्रदो घनः । ङकार स्वरण सर्वरन्ध्रस्थत्रिपुटीप्रभः । ङणद्घण्टारवान्तःस्थः ङणारावादधिप्रियः। ङकाराकारकद्वन्द्व सर्वसन्ध्याप्तचिन्मयः- इत्यधिकम्
7. इतः- चेटीभूत प्रपञ्चश्च चण्डश्चण्डोरुविक्रमः- इत्यधिकम्।

छेदीकृततमःक्लेशश्छत्रीकृतमहायशाः ।
छादिताशेषसंतापश्छुरितामृतसागरः [1] ॥ ३९ ॥

छन्नत्रैगुण्यरूपश्च छातेहश्छिन्नसंशयः [2] ।
छन्दोमयश्छन्दगामी छिन्नपाशश्छविश्छदः [3] ॥ ४० ॥

जगद्धितो जगत्पूज्यो जगज्ज्येष्ठो जगन्मयः ।
जनको जाह्नवीसूनुर्जितामित्रो जगद्गुरुः ॥ ४१ ॥

जयी जितेन्द्रियो जैत्रो जरामरणवर्जितः ।
ज्योतिर्मयो जगन्नाथो जगज्जीवो जनाश्रयः [4] ॥ ४२ ॥

जगत्सेव्यो जगत्कर्ता जगत्साक्षी जगत्प्रियः ।
जम्भारिवन्द्यो जयदो जगज्जनमनोहरः ॥ ४३ ॥

जगदानन्दजनको जनजाड्यापहारकः ।
जपाकुसुमसंकाशो जनलोचनशोभनः ॥ ४४ ॥

जनेश्वरो जितक्रोधो [5] जनजन्मनिबर्हणः ।
जयदो जन्तुतापघ्नो जितदैत्यमहाव्रजः ॥ ४५ ॥

जितमायो जितक्रोधो जितसङ्गो जनप्रियः ।
झंझानिलमहावेगो झरिताशेषपातकः ॥ ४६ ॥

झर्झरीकृतदैत्यौघो झल्लरीवाद्यसंप्रियः ।
ज्ञानमूर्तिर्ज्ञानिगम्यो ज्ञानी ज्ञानमहानिधिः [6] ॥ ४७ ॥

---

*1.* छुरितानीकसागरः *2.* छेदिताशेषदैत्यौघः छातैनाः *3.* इतः- छेदिताशेषसंसारश्छव्यग्रीन्दु विलोचनः- इत्यधिकम् । *4.* इतः- जगद्वन्द्यो जगच्छ्रेष्ठो जितक्लेशो जगद्विभुः- इत्यधिकम् । *5.* जगद्भव्यो *6.* इतः- ज्ञानोपदेशकर्ता च ज्ञानदो ज्ञानदेशिकः इत्यधिकम् ।

टंकारनृत्तविभवः टंकवज्रध्वजाङ्कितः ।
टंकिताखिललोकश्च टंकितैनस्तमोरविः[1] ॥ ४८ ॥

डम्बरप्रभवो डम्भो डम्बो डमरुकप्रियः[2] ।
डमरोत्कटसन्नादो डिंभरूपस्वरूपकः ॥ ४९ ॥

ढक्कानादप्रीतिकरो ढालितासुरसंकुलः ।
ढौकितामरसंदोहो ढुण्डिविघ्नेश्वराजुजः[3] ॥ ५० ॥

तत्त्वज्ञस्तत्वगस्तीव्रस्तपोरूपस्तपोमयः ।
त्रयीमयस्त्रिकालज्ञस्त्रिमूर्तिस्त्रिगुणात्मकः ॥ ५१ ॥

त्रिदशेशस्तारकारिस्तापघ्नस्तापसप्रियः ।
तुष्टिदस्तुष्टिकृत्तीक्ष्णस्तपोरूपस्त्रिकालवित् ॥ ५२ ॥

स्तोता स्तव्यः स्तवप्रीतः स्तुतिः स्तोत्रं स्तुतिप्रियः[4] ।
स्थितः स्थायी स्थापकश्च स्थूलसूक्ष्मप्रदर्शकः ॥ ५३ ॥

स्थविष्ठः स्थविरः स्थूलः स्थानदः स्थैर्यदः स्थिरः ।
दान्तो दयापरो दाता दुरितघ्नो दुरासदः ॥ ५४ ॥

दर्शनीयो दयासारो देवदेवो दयानिधिः ।
दुराधर्षो दुर्विगाह्यो दक्षो दर्पणशोभितः ॥ ५५ ॥

दुर्धरो दानशीलश्च द्वादशाक्षो द्विषड्भुजः ।
द्विषट्कर्णो द्विषड्बाहुर्दीनसंतापनाशनः ॥ ५६ ॥

---

1. इतः- ठकारमध्यनिलयः ठवर्णाकारमण्डलः । ठपदान्त श्रूयमाणनादरूपष्ठकारकः इत्यधिकम् । 2. डमड्डमरुकप्रियः । 3. इतः- णाकार बिन्दुद्वन्द्वैक्य ज्ञानेनाश्चर्यकारकः । णबिन्दुत्रयवन्मध्य बिन्द्वाश्लिष्टद्विवल्लिकः- इत्यधिकम् । 4. इतः- तारेशपूजितस्तथ्यस्तुंबुरूनारदार्चितः- इत्यधिकम् ।

दन्दशूकेश्वरो देवो दिव्यो दिव्याकृतिर्दमः ।
दीर्घवृत्तो[1] दीर्घबाहुर्दीर्घदृष्टिर्दिवस्पतिः ॥ ५७ ॥

दण्डो दमयिता दर्पो देवसिंहो दृढव्रतः ।
दुर्लभो दुर्गमो दीप्तो दुष्प्रेक्ष्यो दिव्यमण्डनः[2] ॥ ५८ ॥

दुरोदरघ्नो दुःखघ्नो दुरारिघ्नो दिशांपतिः ।
दुर्जयो देवसेनेशो दुर्ज्ञेयो दुरतिक्रमः ॥ ५९ ॥

दम्भो दृप्तश्च देवर्षिर्दैवज्ञो दैवचिन्तकः ।
धुरंधरो धर्मपरो धनदो धृतिवर्धनः ॥ ६० ॥

धर्मेशो धर्मशास्त्रज्ञो धन्वी धर्मपरायणः ।
धनाध्यक्षो धनपतिर्धृतिमान्धूतकिल्बिषः ॥ ६१ ॥

धर्महेतुर्धर्मशूरो[3] धर्मकृद्धर्मविद्ध्रुवः ।
धाता श्रीमान्धर्मचारी धन्यो धुर्यो धृतव्रतः[4] ॥ ६२ ॥

नित्योत्सवो नित्यतृप्तो निर्लेपो निश्चलात्मकः ।
निरवद्यो निराधारो निष्कलङ्को निरञ्जनः ॥ ६३ ॥

निर्ममो[5] निरहंकारो निर्मोहो निरुपद्रवः ।
नित्यानन्दो निरातङ्को निष्प्रपञ्चो निरामयः ॥ ६४ ॥

निरवद्यो निरीहश्च निर्दर्शो[6] निर्मलात्मकः ।
नित्यानन्दो[7] निर्जरेशो निःसङ्गो निगमस्तुतः ॥ ६५ ॥

---

*1.* दीर्घपृष्ठो *2.* दिव्यमङ्गलः *3.* धर्मगुरुः *4.* इतः- धरित्रीमण्डलाध्यक्षो धनधान्यविवर्धनः- इत्यधिकम् । *5.* निर्मायो *6.* निर्द्वन्द्वो *7.* नीरजाक्षो

निष्कण्टको निरालम्बो निष्प्रत्यूहो निरुद्भवः ।
नित्यो नियतकल्याणो निर्विकल्पो निराश्रयः ॥ ६६ ॥

नेता निधिर्नैकरूपो निराकारो नदीसुतः[1] ।
पुलिन्दकन्यारमणः पुरुजित्परमप्रियः ॥ ६७ ॥

प्रत्यक्षमूर्तिः प्रत्यक्षः परेशः पूर्णपुण्यदः ।
पुण्याकरः पुण्यरूपः पुण्यः पुण्यपरायणः ॥ ६८ ॥

पुण्योदयः परं ज्योतिः पुण्यकृत्पुण्यवर्धनः ।

परानन्दः परतरः पुण्यकीर्तिः पुरातनः ॥ ६९ ॥

प्रसन्नरूपः प्राणेशः पन्नगः पापनाशनः ।
प्रणतार्तिहरः पूर्णः पार्वतीनन्दनः प्रभुः ॥ ७० ॥

पूतात्मा पुरुषः प्राणः प्रभवः पुरुषोत्तमः ।
प्रसन्नः परमस्पष्टः[2] परः[3] परिबृढः परः ॥ ७१ ॥

परमात्मा परब्रह्म परार्थः[4] प्रियदर्शनः ।
पवित्रः पुष्टिदः पूर्तिः पिङ्गलः पुष्टिवर्धनः ॥ ७२ ॥

पापहारी पाशधरः प्रमत्तासुरशिक्षकः ।
पावनः पावकः पूज्यः पूर्णानन्दः परात्परः ॥ ७३ ॥

पुष्कलः[5] प्रवरः पूर्वः पितृभक्तः पुरोगमः ।
प्राणदः प्राणिजनकः प्रदिष्टः[6] पावकोद्भवः ॥ ७४ ॥

---

1. इतः- नानायुधधरो नादो नानासाम्राज्यदायकः । नागपाशधरो नन्दी नारदादि सुपूजितः । नाट्योत्सुको नदीसूनुः नगारिप्रियदायकः । नक्षत्ररूपी नक्षत्रं नेता नित्योत्सुको नटः । निर्मलो निरहङ्कारो नित्याभीष्टफलप्रदः ।
2. प[illegible]श्रेष्ठः 3. पटुः 4. परर्द्धिः 5. पुष्करः 6. प्रतिष्ठा

परब्रह्मस्वरूपश्च परमैश्वर्यकारणम् ।
परर्द्धिदः पुष्टिकरः प्रकाशात्मा प्रतापवान् ॥ ७५ ॥

प्रज्ञापरः[1] प्रकृष्टार्थः पृथुः पृथुपराक्रमः[2] ।
फणीश्वरः फणिवरः फणामणिविभूषणः ॥ ७६ ॥

फलदः फलहस्तश्च फुल्लाम्बुजविलोचनः ।
फडुच्चाटितपापौघः फणिलोकविभूषणः[3] ॥ ७७ ॥

बाहुलेयो बृहद्रूपो बलिष्ठो बलवान् बली[4] ।
ब्रह्मेशविष्णुरूपश्च बुद्धो बुद्धिमतां वरः ॥ ७८ ॥

बालरूपो ब्रह्मगर्भो[5] ब्रह्मचारी बुधप्रियः ।
बहुश्रुतो बहुमतो ब्रह्मण्यो ब्राह्मणप्रियः ॥ ७९ ॥

बलप्रमथनो ब्रह्मा बहुरूपो बहुप्रदः ।
बृहद्भानुतनूद्भूतो बृहत्सेनो[6] बिलेशयः ॥ ८० ॥

बहुबाहुर्बलश्रीमान् बहुदैत्यविनाशकः ।
बिलद्वारान्तरालस्थो बृहच्छक्तिधनुर्धरः ॥ ८१ ॥

बालार्कद्युतिमान् बालो बृहद्वक्षा बृहद्धनुः[7] ।
भव्यो भोगीश्वरो भाव्यो भवनाशो भवप्रियः ॥ ८२ ॥

---

*1.* प्रज्ञाकरः । *2.* इतः - पूतनाजीवहरणजामाता पूर्णविग्रहः - इत्यधिकम् । *3.* इतः फणिसंघाधरापीतनिजवाणीरसामृतः इत्यधिकम् । *4.* बलः *5.* बृहद्गर्भो *6.* बृहद्बाहुर् । 7. इतः - बद्धतूणीरांसदेशो बद्धपाशविमोचनः - इत्यधिकम् ।

भक्तिगम्यो भयहरो भावज्ञो भक्तसुप्रियः[1] ।
भुक्तिमुक्तिप्रदो भोगी भगवान् भाग्यवर्धनः ॥ ८३ ॥

भ्राजिष्णुर्भावनो भर्ता भीमो भीमपराक्रमः ।
भूतिदो भूतिकृद्भोक्ता भूतात्मा भुवनेश्वरः ॥ ८४ ॥

भावको[2] भीकरो भीष्मो भावकेष्टो[3] भवोद्भवः ।
भवतापप्रशमनो भोगवान् भूतभावनः ॥ ८५ ॥

भोज्यप्रदो भ्रान्तिनाशो भानुमान् भुवनाश्रयः ।
भूरिभोगप्रदो भद्रो भजनीयो भिषग्वरः[4] ॥ ८६ ॥

महासेनो महोदारो महाशक्तिर्महाद्युतिः ।
महाबुद्धिर्महावीर्यो महोत्साहो महाबलः ॥ ८७ ॥

महाभोगी[5] महामायी मेधावी मेखली महान् ।
मुनिस्तुतो महामान्यो महानन्दो महायशाः ॥ ८८ ॥

महोर्जितो माननिधिर्मनोरथफलप्रदः ।
महोदयो महापुण्यो महाबलपराक्रमः ॥ ८९ ॥

मानदो मतिदो माली[6] मुक्तामालाविभूषणः ।
मनोहरो महामुख्यो महर्द्धिर्मूर्तिमान्मुनिः ॥ ९० ॥

महोत्तमो महोपायो मोक्षदो मङ्गलप्रदः ।
मुदाकरो मुक्तिदाता महाभोगो महोरगः ॥ ९१ ॥

---

*1.* भजनप्रियः *2.* भावुको *3.* भावुकेष्टो *4.* इतः- भक्तेष्टदाननिरतो भार्गवाद्यभिवन्दितः- इत्यधिकम् । *5.* महाभागो *6.* मानी

यशस्करो योगयोनिर्योगिष्ठो यमिनां वरः ।
यशस्वी योगपुरुषो योग्यो योगनिधिर्यमी ॥ ९२ ॥

यतिसेव्यो[1] योगयुक्तो योगविद्योगसिद्धिदः ।
यन्त्रो[2] यन्त्री च यन्त्रज्ञो यन्त्रवान्यन्त्रवाहकः[3] ॥ ९३ ॥

यातनारहितो योगी योगीशो योगिनां वरः[4] ।
रमणीयो रम्यरूपो रसज्ञो रसभावनः ॥ ९४ ॥

रञ्जनो रञ्जितो रागी रुचिरो रुद्रसंभवः ।
रणप्रियो रणोदारो रागद्वेषविनाशनः ॥ ९५ ॥

रत्नार्ची रुचिरो रम्यो रूपलावण्यविग्रहः ।
रत्नाङ्गदधरो रत्नभूषणो रामणीयकः ॥ ९६ ॥

रुचिकृद्रोचमानश्च रञ्जितो रोगनाशनः ।
राजीवाक्षो राजराजो रक्तमाल्यानुलेपनः ॥ ९७ ॥

राजद्वेदागमस्तुत्यो रजः सत्त्वगुणान्वितः ।
रजनीशकलारम्यो रत्नकुण्डलमण्डितः ॥ ९८ ॥

रत्नसन्मौलिशोभाढ्यो रणन्मञ्जीरभूषणः[5] ।
लोकैकनाथो लोकेशो ललितो लोकनायकः ॥ ९९ ॥

लोकरक्षो लोकशिक्षो लोकलोचनरञ्जितः ।
लोकबन्धुर्लोकधाता लोकत्रयमहाहितः ॥ १०० ॥

---

*1.* यमिसेव्यो *2.* यन्ता *3.* यन्त्रनायकः *4.* इतः- योगाराध्य पदद्वन्द्वो यमाद्यष्टाङ्गसाधनः- इत्यधिकम् । *5.* इतः- रसवक्त्रधरो रागी रञ्जनीय पदाम्बुजः- इत्यधिकम् ।

लोकचूडामणिर्लोकवन्द्यो लावण्यविग्रहः[1]।
लोकाध्यक्षस्तु लीलावान्लोकोत्तरगुणान्वितः[2]॥ १०१॥

वरिष्ठो वरदो वैद्यो[3] विशिष्टो विक्रमी विभुः।
विबुधाग्रचरो वश्यो[4] विकल्पपरिवर्जितः॥ १०२॥

विपाशो विगतातङ्को विचित्राङ्गो विरोचनः।
विद्याधरो विशुद्धात्मा वेदाङ्गो विबुधप्रियः॥ १०३॥

वर्चस्करो व्यापकश्च विज्ञानी विनयान्वितः।
विद्वत्तमो विरोधिघ्नो वीरो विगतरागवान्[5]॥ १०४॥

वीतभावो[6] विनीतात्मा वेदगर्भो वसुप्रदः[7]।
विश्वदीप्तिर्विशालाक्षो विजितात्मा विभावनः॥ १०५॥

वेदवेद्यो विधेयात्मा वीतदोषश्च वेदवित्[8]।
विश्वकर्मा वीतभयो वागीशो वासवार्चितः॥ १०६॥

वीरध्वंसो विश्वमूर्तिर्विश्वरूपो वरासनः[9]।
विशाखो विमलो वाग्मी विद्वान्वेदधरो वटुः[10]॥ १०७॥

वीरचूडामणिर्वीरो विद्येशो[11] विबुधाश्रयः।
विजयी विनयी वेत्ता वरीयान्विरजा वसुः॥ १०८॥

---

*1.* लोकचूडामणि र्लोलो लावण्यो लयवर्जितः *2.* लोकाध्यक्षो लोकवन्द्यो लोकोत्तरगुणाकरः। इतः- लोकबन्धुर्लोकधाता लोकत्रयमहाहितः। लोकातीत गुणोपेतो लोकालोकस्वरूपवान्। लास्यप्रियो लास्यदर्शी लता कुसुमपूजितः। लब्धमानो लब्धरसो लब्धहर्षो लसत्करः- इत्यधिकम्। *3.* वन्द्यो *4.* विश्वं *5.* वीरासनो विधिः *6.* वीतरागो *7.* विराड्वपुः *8.* वीतदोषो वसुप्रदः *9.* वेदविद्विश्वरूपश्च विश्वमूर्तिर्वरासनः *10.* वाग्मी वेदधरो विद्वान् विशाखो विमलो वटुः *11.* वीरचूडामणिर्वीरविजयो

वीरघ्नो विज्वरो वेद्यो वेगवान्वीर्यवान्वशी ।
वरशीलो वरगुणो विशोको वज्रधारकः ॥ १०९ ॥

शरजन्मा शक्तिधरः शत्रुघ्नः शिखिवाहनः ।
श्रीमान्शिष्टः शुचिः शुद्धः शाश्वतः श्रुतिसागरः ॥ ११० ॥

शरण्यः शुभदः शर्म शिष्टेष्टः शुभलक्षणः ।
शान्तः शूलधरः श्रेष्ठः शुद्धात्मा शङ्करः शिवः ॥ १११ ॥

शितिकण्ठात्मजः शूरः शान्तिदः शोकनाशनः[1] ।
षाण्मातुरः षण्मुखश्च षड्गुणैश्वर्यसंयुतः ॥ ११२ ॥

षट्चक्रस्थः षडूर्मिघ्नः षडङ्गश्रुतिपारगः ।
षड्भावरहितः षट्कः षट्शास्त्रस्मृतिपारगः ॥ ११३ ॥

षड्वर्गदाता षड्ग्रीवः षडरिघ्नः षडाश्रयः ।

षट्किरीटधरः श्रीमान् षडाधारश्च षट्क्रमः ॥ ११४ ॥

षट्कोणमध्यनिलयः षण्डत्वपरिहारकः ।
सेनानीः सुभगः स्कन्दः सुरानन्दः सतां गतिः ॥ ११५ ॥

सुब्रह्मण्यः सुराध्यक्षः सर्वज्ञः सर्वदः[2] सुखी ।
सुलभः सिद्धिदः सौम्यः सिद्धेशः सिद्धिसाधनः ॥ ११६ ॥

सिद्धार्थः सिद्धसंकल्पः सिद्धसाधुः सुरेश्वरः ।
सुभुजः सर्वदृक्साक्षी[3] सुप्रसादः सनातनः ॥ ११७ ॥

---

*1.* इतः- शूरसंहारदक्षश्च शिष्टाचारप्रपूजितः- इत्यधिकम् । *2.* सर्वगः *3.* सर्ववित्साक्षी

सुधापतिः स्वयंज्योतिः स्वयंभूः सर्वतोमुखः ।
समर्थः सत्कृतिः सूक्ष्मः सुघोषः सुखदः सुहृत् ॥ ११८ ॥

सुप्रसन्नः सुरश्रेष्ठः सुशीलः सत्यसाधकः ।
संभाव्यः सुमनाः सेव्यः सकलागमपारगः ॥ ११९ ॥

सुव्यक्तः सच्चिदानन्दः सुवीरः सुजनाश्रयः ।
सर्वलक्षणसंपन्नः सत्यधर्मपरायणः ॥ १२० ॥

सर्वदेवमयः सत्यः[1] सदा मृष्टान्नदायकः ।
सुधापी[2] सुमतिः सत्यः सर्वविघ्नविनाशनः ॥ १२१ ॥

सर्वदुःस्वप्नप्रशमनः सुकुमारः सुलोचनः ।
सुग्रीवः सुधृतिः[3] सारः सुराराध्यः[4] सुविक्रमः ॥ १२२ ॥

सुरारिघ्नः स्वर्णवर्णः सर्पराजः सदा शुचिः ।
सप्तार्चिर्भूः सुरवरः सर्वायुधविशारदः[5] ॥ १२३ ॥

हस्तिचर्माम्बरसुतो हस्तिवाहनसेवितः[6] ।
हस्तचित्रायुधधरो हृताघो हसिताननः ॥ १२४ ॥

हेमभूषो हरिद्वर्णो हृष्टिदो हृष्टिवर्धनः ।
हेमाद्रिभिद्धंसरूपो[7] हुंकारहतकिल्विषः ॥ १२५ ॥

हिमाद्रिजातातनुजो हरिकेशो हिरण्मयः ।
हृद्यो हृष्टो हरिसखो हंसो हंसगतिर्हविः ॥ १२६ ॥

---

1. सत्वं 2. सुधन्वा 3. सुशिराः 4. सुराध्यक्षः 5. इतः- सर्वलोकैकनाथश्च सांबाराधनतत्परः- इत्यधिकम् 6. हस्त्यश्ववाहनो हस्ती हर्षदैत्यहरानुजः । हकाररूपी हंसात्मा हलभृद्धरिपूजितः । हविर्हरिद्रावर्णश्च हृताघो हसिताननः- इत्यधिकम् । 7. हेलाद्रिविध्वंसकारी

हिरण्यवर्णो हितकृद्धर्षदो हेमभूषणः ।
हरप्रियो हितकरो हतपापो हरोद्भवः[1] ॥ १२७ ॥

क्षेमदः क्षेमकृत्क्षेम्यः क्षेत्रज्ञः क्षामवर्जितः[2] ।
क्षेत्रपालः क्षमाधारः क्षेमक्षेत्रः[3] क्षमाकरः ॥ १२८ ॥

क्षुद्रघ्नः क्षान्तिदः क्षेमः क्षितिभूषः क्षमाश्रयः ।
क्षालिताघः क्षितिधरः क्षीणसंरक्षणक्षमः ॥ १२९ ॥

क्षणभङ्गुरसन्नद्धघनशोभिकपर्दकः ।
क्षितिभृन्नाथतनयामुखपङ्कजभास्करः ॥ १३० ॥

क्षताहितः क्षरः क्षन्ता क्षतदोषः क्षमानिधिः ।
क्षपिताखिलसंतापः क्षपानाथसमाननः ॥ १३१ ॥

(अङ्गन्यासः, भूर्भुवस्सुवरोमिति दिग्विमोकः । ध्यानं, लमित्यादि पञ्चपूजा ।
नामपारायणसमर्पणम् ।

## फलश्रुतिः

इति नाम्नां सहस्राणि षण्मुखस्य च नारद ।
यः पठेच्छृणुयाद्वापि भक्तियुक्तेन चेतसा ॥ १ ॥

स सद्यो मुच्यते पापैर्मनोवाक्कायसंभवैः ।
आयुर्वृद्धिकरं पुंसां स्थैर्यवीर्यविवर्धनम् ॥ २ ॥

वाक्येनैकेन वक्ष्यामि वाञ्छितार्थं प्रयच्छति ।
तस्मात्सर्वात्मना ब्रह्मन्नियमेन जपेत्सुधीः ॥ ३ ॥

॥ इति श्रीस्कान्दे महापुराणे ईश्वरप्रोक्ते ब्रह्मनारदसंवादे
षण्मुखसहस्रनामस्तोत्रं संपूर्णम् ॥

*1.* हृदोद्भवः *2.* क्षेत्रविवर्जितः *3.* क्षेम्यः क्षेत्रं

# श्रीषण्मुखसहस्रनामावलिः

[1]अचिन्त्यशक्तये नमः । अनघाय । अक्षोभ्याय । अपराजिताय । अनाथवत्सलाय । अमोघाय । अशोकाय । अजराय । अभयाय । अत्युदाराय । अघहराय । अग्रगण्याय । अद्रिजासुताय । अनन्तमहिम्ने । अपाराय । अनन्तसौख्यप्रदाय । अव्ययाय । अनन्तमोक्षदाय । अनादये । अप्रमेयाय नमः । २०

अक्षराय नमः । अच्युताय । अकल्मषाय । अभिरामाय । अग्रधुर्याय । अमितविक्रमाय[2] । अनाथनाथाय । अमलाय । अप्रमत्ताय । अमरप्रभवे । अरिन्दमाय । अखिलाधाराय । अणिमादिगुणाय । अग्रण्ये । अचञ्चलाय । अमरस्तुत्याय । अकलङ्काय । अमिताशनाय । अग्निभुवे । अनवद्याङ्गाय । ४०

अद्भुताय नमः । अभीष्टदायकाय । अतीन्द्रियाय । अप्रमेयात्मने । अदृश्याय । अव्यक्तलक्षणाय । आपद्विनाशकाय । आर्याय । आढ्याय । आगमसंस्तुताय । आर्तसंरक्षणाय । आद्याय । आनन्दाय । आर्यसेविताय । आश्रितेष्टार्थवरदाय । आनन्दिने । आर्तफलप्रदाय । आश्चर्यरूपाय । आनन्दाय । आपन्नार्तिविनाशनाय नमः ।[3] ६०

---

*1.* षण्मुखनामार्चनक्रमे षष्ठमधोमुखार्चनं एतत् । क्वचिन्नामानि भिद्यन्त इति पृथग्दीयते । *2.* इतः- अतुलाय । अमृताय । अघोराय । अनन्ताय । अनन्तविक्रमाय- इत्यधिकम् । *3.* इतः- आराधितपदद्वन्द्वाय । आगमार्थविशारदाय । आनन्दसुन्दराकाराय । आब्रह्मस्तंबरूपकाय । आधारषट्क निलयाय । आदिमध्यान्तवर्जिताय । आब्रह्मकीटजनकाय । आखण्डल सुताधिपाय इत्यधिकम् ।

इभवक्त्रानुजाय नमः । इष्टाय । इभासुर हरात्मजाय । इतिहासश्रुतिस्तुत्याय । इन्द्रभोगफलप्रदाय । इष्टापूर्तफलप्राप्तये । इष्टेष्टवरदायकाय । इहामुत्रेष्टफलदाय । इष्टदाय । इन्द्रवन्दिताय । ईडनीयाय । ईशपुत्राय । ईप्सितार्थप्रदायकाय । ईतिभीतिहराय । ईड्याय । ईषणात्रयवर्जिताय[1] । उदारकीर्तये । उद्योगिने । उत्कृष्टोरुपराक्रमाय । उत्कृष्टशक्तये नमः । ८०

उत्साहाय नमः । उदाराय । उत्सवप्रियाय । उज्जृम्भाय । उद्भवाय । उग्राय । उदग्राय । उग्रलोचनाय । उन्मत्ताय । उग्रशमनाय । उद्वेगघ्नोरगेश्वराय[2] । उरुप्रभावाय । उदीर्णाय । उमापुत्राय । उदारधिये[3] । ऊर्ध्वरेतःसुताय । ऊर्ध्वगतिदाय । ऊर्जपालकाय । ऊर्जिताय । ऊर्ध्वगाय नमः । १००

ऊर्ध्वाय नमः । ऊर्ध्वलोकैकनायकाय । ऊर्जावते । ऊर्जितोदाराय । ऊर्जितोर्जितशासनाय[4] । ऋषिदेवगणस्तुत्याय । ऋणत्रयविमोचनाय । ऋजुरूपाय । ऋजुकराय । ऋजुमार्गप्रदर्शनाय । ऋतंभराय । ऋजुप्रीताय । ऋषभाय । ऋद्धिदाय । ऋताय[5] । लुलितोद्धारकाय । लूतभवपाशप्रभञ्जनाय ।[6] एणाङ्कधरसत्पुत्राय । एकस्मै । एनोविनाशनाय नमः[7] । १२०

---

*1.* इतः - ईश्वरार्पितवेदान्ताय । ईश्वरप्रियनन्दनाय । ईश्वराङ्कविहारिणे । ईशित्रे । ईश्वररूपधृते इत्यधिकम् । *2.* उद्वेगघ्नाय । उरगेश्वराय *3.* इतः - उदग्रवैभवाय । उदग्रबुद्धये । उदग्रहेतुमते इत्यधिकम् । *4.* इतः- ऊरीकृतधनुर्बाणाय । ऊर्मिषट्कविनाशनाय इत्यधिकम् । *5.* इतः - ऋग्वेदादिस्वरूपाय । ऋद्धात्मने । ऋषिपूजिताय । ॠलेखवत्त्रिनाड्यन्तः सुषुम्नानाडिमध्यगाय । ॠकृत्स्वप्नाद्यजाग्रान्तमध्याय । ॠतंभरात्मकाय इत्यधिकम् । *6.* इतः- लुप्ताचारमनोदूराय । लुप्तदुःखाय । लुलत्प्रभाय । लूनमायासुराय । लूनसंसाराख्य महावनाय इत्यधिकम् । *7.* इतः - एकाग्रध्यानशीलाय । एकान्तध्यानपूजिताय- इत्यधिकम् ।

ऐश्वर्यदाय नमः। ऐन्द्रभोगिने। ऐतिह्याय। ऐन्द्रवन्दिताय[1]। ओजस्विने। ओषधिस्थानाय। ओजोदाय। ओदनप्रदाय[2]। औदार्यशीलाय। औमेयाय। औग्राय। औन्नत्यदायकाय। औदार्याय। औषधकराय। औषधाय। औषधाकराय। अंशुमते। अंशुमालीड्याय। अम्बिकातनयाय। अन्नदाय नमः। १४०

अन्धकारिसुताय नमः। अन्धत्वहारिणे। अम्बुजलोचनाय। अस्तमायाय। अमराधीशाय। अस्पष्टाय। अस्तोकपुण्यदाय। अस्तामित्राय। अस्तरूपाय। अस्खलत्सुगतिदायकाय। कार्तिकेयाय। कामरूपाय। कुमाराय। क्रौञ्चदारणाय। कामदाय। कारणाय। काम्याय। कमनीयाय। कृपाकराय। काञ्चनाभाय नमः। १६०

कान्तियुक्ताय नमः। कामिने। कामप्रदाय। कवये। कीर्तिकृते। कुक्कुटधराय। कूटस्थाय। कुवलेक्षणाय। कुङ्कुमाङ्गाय। क्लमहराय। कुशलाय। कुक्कुटध्वजाय। कुशानुसंभवाय। क्रूराय। क्रूरघ्नाय। कलितापहृते। कामरूपाय। कल्पतरवे। कान्ताय। कामितदायकाय। १८०

कल्याणकृते। क्लेशनाशाय। कृपालवे। करुणाकराय। कलुषघ्नाय। क्रियाशक्तये। कठोराय। कवचिने। कृतिने।

---

*1.* इतः ऐशानपदसन्दायिने। ऐन्द्रदिक्पालजाधिपाय इत्यधिकम्। *12.* इतः- ओंकाररूपिणे। ओङ्काराय। ओंकारार्थविशारदाय इत्यचिकम्।

कोमलाङ्गाय । कुशप्रीताय[1] । कुत्सितघ्नाय । कलाधराय नमः । ख्याताय नमः । खेटधराय । खड्गिने । खट्वाङ्गिने । खलनिग्रहाय । ख्यातिप्रदाय । खेचरेशाय ।। २००

ख्यातेहाय । खेचरस्तुताय । खरतापहराय । खस्थाय । खेचराय । खेचराश्रयाय । खण्डेन्दुमौलितनयाय । खेलाय । खेचरपालकाय । खस्थलाय[2] । खण्डितार्काय नमः । खेचरीजनपूजिताय[3] । गाङ्गेयाय नमः । गिरिजापुत्राय नमः । गणनाथानुजाय नमः । गुहाय नमः । गोप्त्रे नमः । गीर्वाणसंसेव्याय नमः । गुणातीताय नमः । गुहाश्रयाय नमः । २२०

गतिप्रदाय नमः । गुणनिधये नमः । गम्भीराय नमः । गिरिजात्मजाय नमः । गूढरूपाय नमः । गदहराय नमः । गुणाधीशाय नमः । गुणाग्रण्ये[4] नमः । गोधराय । गहनाय । गुप्ताय । गर्वघ्नाय । गुणवर्धनाय । गुह्याय । गुणज्ञाय । गीतिज्ञाय । गतातङ्काय । गुणाश्रयाय[5] । गद्यपद्यप्रियाय । गुण्याय नमः । २४०

गोस्तुताय नमः । गगनेचराय । गणनीयचरित्राय । गतक्लेशाय । गुणार्णवाय[6] । घूर्णिताक्षाय । घृणानिधये । घनगम्भीरघोषणाय । घण्टानादप्रियाय । घोषाय । घोराघौघविनाशनाय । घनानन्दाय[7] । घर्महन्त्रे[8] । घृणावते । घृष्टिपातकाय[9] । घृणिने । घृणाकराय । घोराय । घोरदैत्यप्रहारकाय । घटितैश्वर्यसंदोहाय नमः । २६०

*1.* कुहूप्रीताय *2.* खस्थप्रियाय । *3.* इतः- खेटाद्यायुधसंपन्नाय । खर्वेतरपद प्रदाय इत्यधिकम् *4.* गणाग्रण्ये *5.* गुणोत्तराय *6.* गुहाश्रयाय *7.* घनप्रियाय *8.* घनानन्दाय *9.* घृष्टपातकाय

घनार्थाय नमः । घनसंक्रमाय[1] । चित्रकृते । चित्रवर्णाय । चञ्चलाय । चपलद्युतये । चिन्मयाय । चित्स्वरूपाय । चिरानन्दाय । चिरन्तनाय । चित्रकेलये । चित्रतराय । चिन्तनीयाय । चमत्कृतये । चोरघ्नाय । चतुराय । चारवे । चामीकरविभूषणाय । चन्द्रार्ककोटिसदृशाय । चन्द्रमौलितनूभवाय[2] नमः। २८०

छादिताङ्गाय नमः । छद्महन्त्रे । छेदिताखिलपातकाय । छेदीकृततमः क्लेशाय । छत्रीकृतमहायशसे । छादिताशेषसंतापाय । छरितामृतसागराय ।[3] छन्नत्रैगुण्यरूपाय[4] । छातेहाय[5] । छिन्नसंशयाय । छन्दोमयाय । छन्दगामिने । छिन्नपापाय । छविच्छदाय[6] । जगद्धिताय । जगत्पूज्याय । जगज्ज्येष्ठाय । जगन्मयाय । जनकाय । जाह्नवीसूनवे नमः । ३००

जितामित्राय नमः । जगद्गुरवे । जयिने । जितेन्द्रियाय । जैत्राय । जरामरणवर्जिताय । ज्योतिर्मयाय । जगन्नाथाय । जगज्जीवाय । जनाश्रयाय[7] । जगत्सेव्याय । जगत्कर्त्रे । जगत्साक्षिणे । जगत्प्रियाय । जम्भारिवन्द्याय । जयदाय । जगज्जनमनोहराय । जगदानन्दजनकाय । जनजाड्यापहारकाय । जपाकुसुमसंकाशाय नमः ३२०

---

*1.* घनविक्रमाय । इतः- घृणिमण्डलरूपाय । घनसंपत्प्रदाय । घनाय । ङकारस्वरणसर्वरन्ध्रस्थत्रिपुटीप्रभाय । ङणद्धण्टारवान्तःस्थाय । ङणारावादधिप्रियाय । ङकाराकारकद्वन्द्व सर्वसन्ध्याप्तचिन्मयाय इत्यधिकम् । *2.* इतः- चेटीभूतप्रपञ्चाय । चण्डाय । चण्डोरु विक्रमाय इत्यधिकम् । *3.* छुरितानीकसागराय *4.* छेदिताशेषदैत्यौघाय । *5.* छातैनसे । *6.* इतः- छेदिताशेषसंसाराय । छव्यग्रीन्दु विलोचनाय-इत्यधिकम् । *7.* इतः- जगद्वन्द्याय । जगच्छ्रेष्ठाय । जितक्लेशाय । जगद्विभवे इत्यधिकम् ।

जनलोचनशोभनाय नमः । जनेश्वराय । जितक्रोधाय[1] । जनजन्मनिबर्हणाय । जयदाय । जन्तुतापघ्नाय । जितदैत्यमहाव्रजाय । जितमायाय । जितक्रोधाय । जितसंगाय । जनप्रियाय । झंझानिलमहावेगाय । झरिताशेषपातकाय । झर्झरीकृतदैत्यौघाय । झल्लरीवाद्यसंप्रियाय । ज्ञानमूर्तये । ज्ञानगम्याय । ज्ञानिने । ज्ञानमहानिधये[2] । टंकारनृत्तविभवाय । ३४०

टंकवज्रध्वजाङ्किताय । टंकिताखिललोकाय । टंकितैनस्तमोरवये[3] । डंबरप्रभवाय । डंभाय । डंबाय । डमरुकप्रियाय[4] । डमरोत्कटसन्नादाय । डिंभरूपस्वरूपकाय । ढक्कानादप्रीतिकराय । ढालितासुरसंकुलाय । ढौकितामरसंदोहाय । ढुंढिविघ्नेश्वरानुजाय[5] । तत्त्वज्ञाय । तत्वगाय । तीव्राय । तपोरूपाय । तपोमयाय । त्रयीमयाय । त्रिकालज्ञाय नमः । ३६०

त्रिमूर्तये । त्रिगुणात्मकाय । त्रिदशेशाय । तारकारये । तापघ्नाय । तापसप्रियाय । तुष्टिदाय । तुष्टिकृते । तीक्ष्णाय । तपोरूपाय । त्रिकालविदे । स्तोत्रे । स्तव्याय । स्तवप्रीताय । स्तुतये । स्तोत्राय । स्तुतिप्रियाय[6] । स्थिताय । स्थायिने । स्थापकाय । ३८०

---

1. जगद्भव्याय । 2. इतः- ज्ञानोपदेशकर्त्रे । ज्ञानदाय । ज्ञानदेशिकाय - इत्यधिकम् । 3. इतः - ठकारमध्यनिलयाय । ठवर्णाकार मण्डलाय । ठपदान्त श्रूयमाणनाद रूपाय । ठकारकाय इत्यधिकम् । 4. डंबाय । डमरुकप्रियाय इति स्थाने डमड्डमरु कप्रियाय । 5. इतः - णकारबिन्दुद्वन्द्वैक्यज्ञानेनाश्चर्यकारकाय । णबिन्दुत्रयवन्मध्यबिन्द्वाश्लिष्टद्विवल्लिकाय इत्यधिकम् । 6. इतः - तारेशपूजिताय । तथ्याय । तुंबुरुनारदार्चिताय इत्यधिकम् ।

स्थूलसूक्ष्मप्रदर्शकाय नमः । स्थविष्ठाय । स्थविराय । स्थूलाय । स्थानदाय । स्थैर्यदाय । स्थिराय । दान्ताय । दयापराय । दात्रे । दुरितघ्नाय । दुरासदाय । दर्शनीयाय । दयासाराय । देवदेवाय । दयानिधये । दुराधर्षाय । दुर्विगाह्याय । दक्षाय । दर्पणशोभिताय नमः । ४००

दुर्धराय । दानशीलाय । द्वादशाक्षाय । द्विषड्भुजाय । द्विषट्कर्णाय । द्विषड्बाहवे । दीनसंतापनाशनाय । दन्दशूकेश्वराय । देवाय । दिव्याय । दिव्याकृतये । दमाय । दीर्घवृत्ताय[1] । दीर्घबाहवे । दीर्घदृष्टये । दिवस्पतये । दण्डाय । दमयित्रे । दर्पाय । देवसिंहाय नमः । ४२०

दृढव्रताय । दुर्लभाय । दुर्गमाय । दीप्ताय । दुष्प्रेक्ष्याय । दिव्यमण्डनाय[2] । दुरोदरघ्नाय । दुःखघ्नाय । दुरारिघ्नाय । दिशांपतये । दुर्जयाय । देवसेनेशाय । दुर्ज्ञेयाय । दुरतिक्रमाय । दम्भाय । दृप्ताय । देवर्षये । दैवज्ञाय । दैवचिन्तकाय । धुरंधराय नमः । ४४०

धर्मपराय । धनदाय । धृतिवर्धनाय । धर्मेशाय । धर्मशास्त्रज्ञाय । धन्विने । धर्मपरायणाय । धनाध्यक्षाय । धनपतये । धृतिमते । धूतकिल्बिषाय । धर्महेतवे । धर्मशूराय[3] । धर्मकृते । धर्मविदे । ध्रुवाय । धात्रे । धीमते । धर्मचारिणे । धन्याय नमः । ४६०

धुर्याय नमः । धृतव्रताय[4] । नित्योत्सवाय । नित्यतृप्ताय । निर्लेपाय । निश्चलात्मकाय । निरवद्याय । निराधाराय ।

---

*1.* दीर्घपृष्ठाय । *2.* दिव्यमङ्गलाय *3.* धर्मशूराय । *4.* इतः- धरित्रीमण्डलाध्यक्षाय । धनधान्यविवर्धनाय इत्यधिकम्

निष्कलङ्काय। निरञ्जनाय। निर्ममाय[1]। निरहंकाराय। निर्मोहाय। निरुपद्रवाय। नित्यानन्दाय। निरातङ्काय। निष्प्रपञ्चाय। निरामयाय। निरवद्याय। निरीहाय नमः। ४८०

निर्दर्शाय[2] नमः। निर्मलात्मकाय। नित्यानन्दाय[3]। निर्जरेशाय। निःसंगाय। निगमस्तुताय। निष्कण्टकाय। निरालम्बाय। निष्प्रत्यूहाय। निरुद्भवाय। नित्याय। नियतकल्याणाय। निर्विकल्पाय। निराश्रयाय। नेत्रे। निधये। नैकरूपाय। निराकाराय। नदीसुताय[4]। पुलिन्दकन्यारमणाय नमः। ५००

पुरुजिते नमः। परमप्रियाय। प्रत्यक्षमूर्तये। प्रत्यक्षाय। परेशाय। पूर्णपुण्यदाय। पुण्याकराय। पुण्यरूपाय। पुण्याय। पुण्यपरायणाय। पुण्योदयाय। परस्मै ज्योतिषे। पुण्यकृते। पुण्यवर्धनाय। परानन्दाय। परतराय। पुण्यकीर्तये। पुरातनाय। प्रसन्नरूपाय। प्राणेशाय नमः। ५२०

पन्नगाय नमः। पापनाशनाय। प्रणतार्तिहराय। पूर्णाय। पार्वतीनन्दनाय। प्रभवे। पूतात्मने। पुरुषाय। प्राणाय। प्रभवाय। पुरुषोत्तमाय। प्रसन्नाय। परमस्पष्टाय[5]। पराय[6]। परिबृढाय। परस्मै। परमात्मने। परब्रह्मणे। परार्थाय[7]। प्रियदर्शनाय नमः। ५४०

---

*1.* निर्मायाय *2.* निर्द्वन्द्वाय *3.* नीरजाक्षाय। *4.* इतः - नानायुधधराय। नादाय। नानासाम्राज्यदायकाय। नागपाशधराय। नन्दिने। नारदादि सुपूजिताय। नाट्योत्सुकाय। नदीसूनवे। नागारिप्रियदायकाय। नक्षत्ररूपिणे। नक्षत्राय। नेत्रे। नित्योत्सुकाय। नटाय। निर्मलाय। निरहङ्काराय। नित्याभीष्टफलप्रदाय। इत्यधिकम्। *5.* परमश्रेष्ठाय। *6.* पटवे *7.* परर्द्धये

पवित्राय नमः। पुष्टिदाय। पूर्तये। पिङ्गलाय। पुष्टिवर्धनाय। पापहारिणे । पाशधराय । प्रमत्तासुरशिक्षकाय । पावनाय । पावकाय । पूज्याय । पूर्णानन्दाय । परात्पराय । पुष्कलाय[1] । प्रवराय । पूर्वस्मै । पितृभक्ताय । । पुरोगमाय । प्राणदाय । प्राणिजनकाय नमः। ५६०

प्रदिष्टाय[2] नमः । पावकोद्भवाय । परब्रह्मस्वरूपाय । परमैश्वर्यकारणाय । परर्द्धिदाय । पुष्टिकराय । प्रकाशात्मने । प्रतापवते। प्रज्ञापराय[3]। प्रकृष्टार्थाय। पृथवे। पृथुपराक्रमाय[4]। फणीश्वराय । फणिवराय । फणामणिविभूषणाय । फलदाय । फलहस्ताय । फुल्लाम्बुजविलोचनाय । फडुच्चाटितपापौघाय । फणिलोकविभूषणाय[5]। ५८०

बाहुलेयाय। बृहद्रूपाय। बलिष्ठाय। बलवते। बलिने[6]। ब्रह्मेशविष्णुरूपाय। बुद्धाय। बुद्धिमतां वराय। बालरूपाय। ब्रह्मगर्भाय[7]। ब्रह्मचारिणे। बुधप्रियाय। बहुश्रुताय। बहुमताय। ब्रह्मण्याय। ब्राह्मणप्रियाय। बलप्रमथनाय। ब्रह्मणे। बहुरूपाय। बहुप्रदाय नमः। ६००

बृहद्भानुतनूद्भूताय नमः । बृहत्सेनाय[8] । बिलेशयाय । बहुबाहवे । बलश्रीमते । बहुदैत्यविनाशकाय । बिलद्वारान्तरालस्थाय। बृहच्छक्तिधनुर्धराय। बालार्कद्युतिमते। बालाय। बृहद्वक्षसे। बृहद्धनुषे[9]। भव्याय। भोगीश्वराय। भाव्याय।

---

1. पुष्कराय 2. प्रतिष्ठायै। 3. प्रज्ञाकराय 4. इतः- पूतनाजीवहरणजामात्रे। पूर्णविग्रहाय इत्यधिकम्। 5. इतः- फणिसंघाधरापीतनिजवाणीरसामृताय इत्यधिकम्। 6. बलाय 7. बृहद्गर्भाय 8. बृहद्बाहवे। 9. इतः- बद्धतूणीरांसदेशाय। बद्धपाशविमोचनाय इत्यधिकम्

भवनाशाय । भवप्रियाय । भक्तिगम्याय । भयहराय । भावज्ञाय नमः । ६२०

भक्तसुप्रियाय[1] नमः । भुक्तिमुक्तिप्रदाय । भोगिने । भगवते । भाग्यवर्धनाय । भ्राजिष्णवे । भावनाय । भर्त्रे । भीमाय । भीमपराक्रमाय । भूतिदाय । भूतिकृते । भोक्त्रे । भूतात्मने । भुवनेश्वराय । भावकाय[2] । भीकराय । भीष्माय । भावकेष्टाय[3] । भवोद्भवाय नमः । ६४०

भवतापप्रशमनाय नमः । भोगवते । भूतभावनाय । भोज्यप्रदाय । भ्रान्तिनाशाय । भानुमते । भुवनाश्रयाय । भूरिभोगप्रदाय । भद्राय । भजनीयाय । भिषग्वराय[4] । महासेनाय । महोदाराय । महाशक्तये । महाद्युतये । महाबुद्धये । महावीर्याय । महोत्साहाय । महाबलाय । महाभोगिने[5] नमः । ६६०

महामायिने नमः । मेधाविने । मेखलिने । महते । मुनिस्तुताय । महामान्याय । महानन्दाय । महायशसे । महोर्जिताय । माननिधये । मनोरथफलप्रदाय । महोदयाय । महापुण्याय । महाबलपराक्रमाय । मानदाय । मतिदाय । मालिने[6] । मुक्तामालाविभूषणाय । मनोहराय । महामुख्याय नमः । ६८०

महर्द्धये नमः । मूर्तिमते । मुनये । महोत्तमाय । महोपायाय । मोक्षदाय । मङ्गलप्रदाय । मुदाकराय । मुक्तिदात्रे । महाभोगाय । महोरगाय । यशस्कराय । योगयोनये । योगिष्ठाय । यमिनां वराय यशस्विने । योगपुरुषाय । योग्याय । योगनिधये । यमिने नमः । ७००

---

*1.* भजनप्रियाय । *2.* भावुकाय । *3.* भावुकेष्टाय *4.* इतः - भक्तेष्टदाननिरताय । भार्गवाद्यभिवन्दिताय । इत्यधिकम् । *5.* महाभागाय । *6.* मानिने

यतिसेव्याय[1] नमः । योगयुक्ताय । योगविदे । योगसिद्धिदाय । यन्त्राय[2] । यन्त्रिणे । यन्त्रज्ञाय । यन्त्रवते । यन्त्रवाहकाय[3] । यातनारहिताय । योगिने । योगीशाय । योगिनां वराय[4] । रमणीयाय । रम्यरूपाय । रसज्ञाय । रसभावनाय । रञ्जनाय । रञ्जिताय । रागिणे नमः । ७२०

रुचिराय नमः । रुद्रसंभवाय । रणप्रियाय । रणोदाराय । रागद्वेषविनाशनाय । रत्नार्चिषे । रुचिराय । रम्याय । रूपलावण्यविग्रहाय । रत्नाङ्गदधराय । रत्नभूषणाय । रमणीयकाय । रुचिकृते । रोचमानाय । रञ्जिताय । रोगनाशनाय । राजीवाक्षाय । राजराजाय । रक्तमाल्यानुलेपनाय । राजद्वेदागमस्तुत्याय नमः । ७४०

रजः सत्त्वगुणान्विताय नमः । रजनीशकलारम्याय । रत्नकुण्डलमण्डिताय । रत्नसन्मौलिशोभाढ्याय । रणन्मञ्जीरभूषणाय[5] । लोकैकनाथाय । लोकेशाय । ललिताय । लोकनायकाय । लोकरक्षाय । लोकशिक्षाय । लोकलोचनरञ्जिताय । लोकबन्धवे । लोकधात्रे । लोकत्रयमहाहिताय । लोकचूडामणये । लोकवन्द्याय । लावण्यविग्रहाय[6] । लोकाध्यक्षाय । लीलावते[7] । ७६०

---

*1.* यमिसेव्याय *2.* यन्त्रे *3.* यन्त्रनायकाय *4.* इतः परं - योगाराध्यपदद्वन्द्वाय । यमाद्यष्टाङ्गसाधनाय इत्यधिकम् । *5.* इतः - रसवक्त्रधराय । रागिणे । रञ्जनीय पदाम्बुजाय इत्यधिकम् । *6.* लोकचूडामणये । लोलाय । लावण्याय । लयवर्जिताय । *7.* लोकवन्द्याय ।

